ज्ञानप्राप्तिकालींच त्याला मुक्तदशा प्राप्त आहे ह्मणून त्यास इतर कोणतीच गती प्राप्त होणेंची भीति नाहीं. ॥ १२॥

गोपदं पृथिवी मेरुः स्थाणुराकाशमुद्रिका ॥
तृणं त्रिभुवनं राम नैराश्यालङ्कृताकृतेः ॥१३॥

गोपदमिति । नैराश्येन अलंकृता शोभिता आकृतिर्यस्य वितृष्णस्य पुंसः पृथिवी गोपदप्राया भवति । मेरुः स्तंभप्रायः । नभः मुद्रिकाच्छिद्राकाशप्रायम् । त्रिभुवनं तृणप्रायम् । किंबहुना सर्वथा वितृष्णः श्रेयानित्यर्थः ॥ १३ ॥

आशारहित जो पुरुष आहे त्याला हें संपूर्ण तुच्छ आहे. ह्मणजे पृथ्वी गोपदाप्रमाणें, मेरुपर्वत एखाद्या खांबाप्रमाणें व आकाश मुद्रिकेंतील आकाशाप्रमाणें भासतात. व त्रिभुवनही तृणाप्रमाणेंच तो मानतो. ह्मणून सर्वांहून त्याची योग्यता मोठी आहे. ॥ १३ ॥

अन्तः शून्यो बहिः शून्यः शून्यकुम्भ इवाम्बरे ॥
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ॥ १४ ॥

अन्तरिति । ज्ञानी धीरः अन्तर्बहिरपि शून्यप्रायः शून्यकुंभवत् द्वितीयाभावात् । अन्तर्बहिः पूर्णोऽप्यर्णवे जलपूर्णकुंभवत् ब्रह्मानंदेन सर्वत्र पूर्णत्वादित्यर्थः ॥ १४ ॥

ज्ञानी आंतून व बाहेरून शून्य असतो. याला दृष्टांत, आकाशांत रिक्तकुंभ ठेविला असतां तो जसा आंतून व बाहेरूनही शून्य असतो त्याप्रमाणें. तसेंच ज्ञानी आंतून व बाहेरून पूर्णही आहे. कसा तर जलामध्यें कुंभ भरून ठेविला असतां तो आंतून व बाहेरून उदकानें पूर्ण असतो त्याप्रमाणें ज्ञानी ब्रह्मज्ञानानें पूर्ण व इतरांनीं शून्य असा आहे. ॥ १४ ॥

ईप्सितानीप्सितौ नस्तोयस्यान्तर्वस्तुदृष्टिषु ॥

सुप्त इव प्रवर्तते स मुक्त इति कथ्यते ॥१५॥

ईप्सितेति । यस्य पुंसः पदार्थदर्शनेषु अयं मे इष्टोऽयमनिष्ट इति न भवति । अतएव सुप्त इव प्रवर्तते । सुप्तस्य यथाऽभिलापाऽनभिलापाभावस्तथा यस्य प्रियाप्रियाभावः स मुक्त एवेत्यर्थः ॥ १५ ॥

ज्यापुरुषाला पदार्थ, दृष्टीगोचर झाला असतां हा इष्ट आणि हा अनिष्ट असा अभिलाप होत नाहीं व जसा झोपाळू असतो त्याप्रमाणें वर्तन करितो ह्मणजे त्याला प्रिय किंवा अप्रिय हा भाव नाहीं तो मुक्त आहे असें समजावें ॥ १५ ॥

निर्ग्रन्थिः शान्तसन्देहो जीवन्मुक्तः स्वभावतः ॥
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ॥१६॥

निर्ग्रन्थिरिति । जीवन्मुक्त ईदृशोभवति निर्ग्रन्थिः गलिताहंकारो गतसंदेहः स्वभावतः अनिर्वाणः ब्रह्मणोंतर्भासमानत्वात् । परन्तु लोकदृष्ट्या चित्रदीप इव प्रशान्तः सन्स्थितः ॥ १६ ॥

आतां जीवन्मुक्त कसा असतो तें लक्षण सांगतात. ज्याचा अहंकार गेला आहे, आंत ब्रह्माविर्भावानें जरी तेजयुक्त आहे तथापि लोकदृष्टीनें चित्रांतील दिव्याप्रमाणें नेहमीं प्रशांत, अशा लक्षणांनीं जो युक्त तो जीवन्मुक्त समजावा. ॥ १६ ॥

अहङ्कारमयीं त्यक्त्वा वासनां लीलयैव यः ॥
तिष्ठति ध्येयसंत्यागी जीवन्मुक्तः स उच्यते ॥ १७॥

अहङ्कारेति । स जीवन्मुक्तः योऽहङ्कारोत्पन्नां वासनां लीलयैव ह्यनायासेन त्यक्त्वा ध्येयमपि संत्यज्य स्वरूपभूतस्तिष्ठति ॥ १७ ॥

जो अहंकारापासून उत्पन्न झालेली जी वासना तिचा परित्याग-करून व ध्येय वस्तुचाहि परित्याग करून स्वरूपानें ह्मणजे ब्रह्मस्वरूपानें रहातो तो जीवन्मुक्त समजावा. ॥ १७ ॥

दूरे मुञ्चति बन्धुमन्धमिव यः सङ्गाद्भुजङ्गादिवत् ॥
त्रासं यो विदधाति वेत्ति सदृशं रोगं च भोगं च यः ॥
स्त्रैणेयस्तृणवद्घृणां प्रकुरुते मित्रेष्वमित्रेष्वपि ॥
स्वान्तं यस्य समं समङ्गलमिहामुत्रापि मर्त्योऽश्नुते॥१८

दूरेति। स पुमानिहलोकेऽपि मंगलं कल्याणं मोक्षमाप्नोति। स कः यः सुहृदमन्धमिव दूरं त्यजति। यश्च सर्पादिवज्जनसंगात्त्रस्यति। यश्च रोगं भोगं च तुल्यं जानाति। यश्च स्त्रीसमूहे कुत्सितस्तृणवज्जुगुप्सां कुरुते। यस्य च चित्तं शत्रौ मित्रे च समं ईदृशो जीवन्मुक्तो भवतीत्यर्थः ॥ १८ ॥

जो अंधाप्रमाणें बंधुवर्गाचा सर्वथा त्याग करितो, व सर्प जसा दुसऱ्याच्या संगापासून त्रास मानतो त्याप्रमाणें जनसंगापासून त्रस्त-होतो, व रोग आणि भोग हे सारखे मानतो, व स्त्रीसमूहाचे ठिकाणीं कुत्सित होत्साता तृणवत् निंदा करितो, आणि शत्रु व मित्र यांचे ठिकाणीं ज्याचें चित्त सारखें आहे त्याला जीवन्मुक्त ह्मणावें. ॥ १८ ॥

हृदयात्संपरित्यज्य सर्वदृश्यं प्रशान्तधीः ॥
व्योमसौम्यतरो व्यग्रः स मुक्तः परमेश्वरः ॥१९॥

हृदयादिति। यो दृश्यं प्रपञ्चं मनसः सकाशाद्दूरं सक्त्वाऽऽकाशवन्निर्मलतरः सन्न व्यग्रो भवति स परमेश्वरतुल्यवन्मुक्त एव ॥ १९ ॥

जो पुरुष हा दृश्यप्रपंच मनापासून दूर झुगारून देऊन आ-काशाप्रमाणें निर्मळ असतो व कदापि व्यग्र असत नाहीं तो साक्षात् परमात्मास्वरूपी असा जीवन्मुक्त समजावा. ॥ १९ ॥

समाधिमथ कर्माणि मा करोतु करोतु वा ॥
हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥ २० ॥

समाधिमिति । यश्चित्तेन त्यक्ततृष्णः स ध्यानं करोतु संसारकर्माणि वा करोतु माकरोतु वा सर्वथा उत्तमाशयत्त्वान्मुक्तएव सर्वथा तृष्णात्यागे मुक्तिरित्यर्थः ॥ २० ॥

ज्याच्या मनानें इच्छा सोडली आहे तो समाधि करो अगर न करो तशींच संसारकर्मे करो किंवा न करो. तो उत्तम आशयानें युक्त असतो म्हणून मुक्त समजावा. तात्पर्य, तृष्णारहित झालें असतां मुक्ति प्राप्त होते. ॥ २० ॥

अनात्मन्यात्मधीर्बन्धस्तन्नाशो मोक्ष उच्यते ॥
बन्धमोक्षौ न विद्येते नित्यमुक्तस्य चात्मनः ॥ २१ ॥

आत्मनीति । देहादावात्मबुद्धिर्बन्धस्तत्र याऽनात्मबुद्धिः स एव मोक्षः । वस्तुतस्तु आत्मनो बन्धमोक्षाभावएव । नित्यमुक्तत्वादद्वितीयब्रह्मत्वादित्यर्थः ॥ २१ ॥

आतां बंध म्हणजे काय व मोक्ष म्हणजे काय हें सांगतात. देह हाच आत्मा आहे अशी जी बुद्धी हिचें नांव बंध आणि देह हा आत्मा नसून त्यांत रहाणारा आत्मा निराळा आहे अशी जी बुद्धि हा मोक्ष. वस्तुतः आत्मा नित्य मुक्त आहे करितां बंध व मोक्ष हे त्याला बिलकूल नाहींत. कारण, तो अद्वितीय जें ब्रह्म तत्स्वरूपी आहे. ॥ २१ ॥

दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ॥
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ २२ ॥

दृश्यमिति । कालत्रयेऽपि भ्रममन्तरा दृश्यं नास्त्येवेति ज्ञानेन मनसः सकाशाद्यदि दृश्यनिराकरणं जातं तदा मोक्षसुखमेवेति ज्ञेयम् ॥ २२ ॥

जें कांहीं दृश्य आहे तें कालत्रयींही नाहीं तर हा सर्व मनाला भ्रम आहे अशाप्रकारें मनापासून सर्वांचें निराकरण करावें ह्मणजे मग तो मोक्षसुखाला पावतो. ॥ २२ ॥

न मोक्षो नभसः पृष्ठे पाताले नच भूतले ॥
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥२३॥

न मोक्ष इति । मोक्षो नाम कश्चित्पदार्थः आकाशान्ते च पाताले वा भूमौ वा किंबहुना स्वभावाद्व्यवहितदेशवर्ती नास्ति किंतु सर्वपदार्थविषयतृष्णानाशे सति या चित्तशान्तिः स एव मोक्ष इत्यर्थः ॥ २३ ॥

मोक्ष ह्मणून कांहीं पदार्थ आकाशांत अगर पाताळांत किंवा भूमंडळांत आहे असें नाहीं, तर सर्व पदार्थांविषयीं तृष्णारहित झाल्यावर जी मनाला शांति होणें तोच मोक्ष समजावा. ॥ २३ ॥

अनन्ते चिद्घनानन्दे निर्विकल्पैकरूपिणि ॥
स्थिते द्वितीयस्याभावात्को बन्धो मोक्ष एव वा ॥२४॥

अनन्तेति । चिदानन्दैकरूपेऽविनाशिनि विकल्पातीते ब्रह्माणि व्यापके स्थिते सति को नाम बन्धः कश्च मोक्षः द्वितीयाभावादित्यर्थः ॥ २४ ॥

अनंतचिद्घन, आनंद, अविनाशी, निर्विकल्प असें जें ब्रह्म त्याचे ठिकाणीं बंध व मोक्ष कोठून असेल! कारण तें अद्वितीय ह्मणजे एकच आहे. ॥ २४ ॥

मन एवोल्लसन्मात्रं बद्धतामगमद्यतः ॥
मनः प्रशमने राम मोक्ष एवावशिष्यते ॥२५॥

इति लघुयोगवासिष्ठसारे जीवन्मुक्तलक्षणं नाम तृतियं प्रकरणम् ॥

**मन इति । मन एव उल्लसन्मात्रेण बन्धभावं प्राप्तं यतः अतस्तस्यैव हे राम प्रशमनं स एव मोक्षः ॥२५॥ इति लघुयोगवासिष्ठसारटीकायां जिवन्मुक्तलक्षण नाम तृतीयप्रकरणं ॥**

वसिष्ठ ह्मणतात, रामा, मनाचा जो उल्हास तोच बंध व त्या मनाचें प्रशमन तोच मोक्ष आहे. ॥ २५ ॥ याप्रमाणें जीवन्मुक्तलक्षणाविषयींचें तृतीय प्रकरण समाप्त झालें.

# अथ मनोलयं नाम चतुर्थं प्रकरणम्

वसिष्ठ उवाच ॥ एतत्स्वभावाभिमतं स्वतः संकल्प्य धावति ॥ चेतना स्वयमम्लाना सैवेह मन आत्मनः॥ १ ॥

**रसायनमयी गीता परमानन्ददायिनी ॥ नानन्दयति कं नाम साधुसंङ्गमचन्द्रिका ॥ १ ॥ वसिष्ठ उ० ॥ एप इत्यादिना इदानीं मनोलयं वर्णयति । स्वयमेवाम्लानाऽखण्डिता या चेतनाऽन्तःकरणं सैवाऽऽत्मनो मनः संज्ञकं भूत्वा स्वयमितस्ततो धावति किंकृत्वा नानाविधामिष्टानिष्टं संकल्प्य । तस्मात्संकल्पत्याग एव श्रेयानित्यर्थः ॥ १ ॥**

वसिष्ठ ह्मणतात, रामा, आतां तुला मनाचा लय कसा होतो तें सांगतों, स्वतः अखंडित जी चेतना ह्मणजे अंतःकरण तेंच मन असें समज. तें मन नानाप्रकारचे इष्टसंकल्प करून इकडे तिकडे धावतें ह्मणून संकल्पाचा त्याग करणें हें मुख्य श्रेयस्कारक आहे. ॥ १ ॥

एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः ॥
विभागकल्पनाशक्तिर्लहरिवोत्थितांभसः॥ २ ॥

एतस्मादिति । सर्वव्यापिनो जगद्रूपक्रीडावतोऽखिलसामर्थ्यान्महाभागादेतस्मात्परमेश्वराद्विश्वविभागरचनारूपा शक्तिरुत्थिता यथा जलात्कल्लोलः उदेति तद्वदित्यर्थः ॥ २ ॥

ह्याविश्वाचे उत्पत्तीविषयीं जी शक्ती आहे ती, सर्वव्यापक, व जगद्रूपानें क्रीडा करणारा, अखिलसामर्थ्य ज्यास आहे असा जो महाभाग परमेश्वर त्यापासूनच आली; जशी जलापासून लाट उत्पन्न होते. परंतु ती जलरूपीच असते; त्याप्रमाणें हें विश्वही तत्स्वरूपच आहे. ॥ २ ॥

अतः संकल्पसिद्धेयं संकल्पेनैव शाम्यति ॥
येनैव जायते तेन वन्हिज्वालेव वायुना ॥ ३ ॥

अत इति । यतो यद्वस्तु येन निमित्तेनोत्पद्यते तेनैव तन्नश्यतीति दृष्टम् । यथा ज्वालादो यथा वन्हिज्वाला वायुना उत्पद्यते तेनैव च शाम्यति । अतो हेतोरियं संसारपरंपरा संकल्पेनैव सिद्धा संकल्पेनैव नश्यति । धनविषयसंकल्पाज्जाता ब्रह्मविषयसंकल्पान्नश्यतीत्यर्थः ॥ ३ ॥

ज्यानिमित्तानें जें उत्पन्न होतें तें त्याच निमित्तानें नष्ट होतें या न्यायानें संकल्पापासून उत्पन्न जो ही संसारपरंपरा ती संकल्पानेंच नष्ट होते यास दृष्टांत अग्निज्वाला वायूपासून उत्पन्न होतात आणि त्या वायूनेंच नाहींशाही होतात. त्याप्रमाणें धनविषय संकल्पापासून झालेली कल्पना ब्रह्मविषय संकल्पानें नष्ट होते. ॥ ३ ॥

मनोऽमुनैवाभ्युदितं मनागेवानवेक्षणात् ॥
स्वस्वप्नमरणाकारं प्रेक्षमाणं न विद्यते ॥ ४ ॥

मन इति । अमुना संकल्पेनैवाभ्युदितं मनः मनाक् स्वल्पमप्यनवेक्षणादविचारादुदितमतएव स्वस्यैव स्वप्ने मरणाकारं । यथा स्वप्ने स्वप्नमरणं वृथा एवं मनोऽपि । तदेव प्रेक्षमाणं सन्नास्ति यथा स्वप्नमरणं ॥ ४ ॥

हें मन थोड्या दुर्लक्ष्यामुळें त्याच संकल्पापासून उत्पन्न झालें. आतां जसें आपल्या स्वप्नांत आपलें मरण पाहणें हें मिथ्या आहे त्याप्रमाणें मनही खोटें आहे. ॥ ४ ॥

असम्यग्दर्शनं यत्स्यादनात्मन्यात्मभावनं ॥
यदवस्तुनि वस्तुत्वं तन्मनो विद्धि राघव ॥५॥

असम्यगिति। अनात्मनि देहादौ यदात्मभावनमात्मत्वबुद्धिस्तदसम्यग्दर्शनं मिथ्याज्ञानम्। अवस्तुभूते संसारे या वस्तुबुद्धिः हे राम तन्मनो जानीहि ॥ ५ ॥

आतां मन ह्मणजे काय तें सांगतात. देहाचे ठिकाणीं जी आत्मबुद्धि त्याला मिथ्याज्ञान ह्मणावें. तसेंच अवस्तुभूत जो हा संसार त्याला वस्तुभूत ह्म० खरा असें जें ज्ञान त्याला मन ह्मणावें. तात्पर्य, जें संकल्पविकल्पात्मक तें मन समजावें. ॥ ५ ॥

अयं सोऽहमिदं तन्मम एतावन्मात्रकं मनः ॥
तदभावनमात्रेण विचारेण विलीयते ॥ ६ ॥

अयमिति। आत्माऽयं देहरूपो यः सोऽहं इदं धनादिकं ममेत्येतावन्मिथ्याभूतज्ञानात्मकं मनः दृश्यं सर्वं नास्त्येतावद्विचारमात्रेण विलीयते ॥ ६ ॥

देहरूप जो आत्मा तो मी, हें धनआदिकरून सर्व माझें आहे असें मिथ्याज्ञानात्मक जें मन, तें च, हें सर्वमिथ्या आहे, देह हा आत्मा नव्हे, धनादिक हीं माझीं नव्हत अशा विपरीत विचारानें लीन होतें. ॥ ६ ॥

उपादेयानुपतनं हेयैकान्तविवर्जनम् ॥
यदेतन्मनसो रूपं तद्बन्धं विद्धि राघव ॥ ७ ॥

उपादेयेति। उपादेयस्य विषयादेर्यदनुपतनमनुसारणं

ग्रहणमिति यावत् । हेयस्य सर्पादेर्विवर्जनं त्यागः तन्मनसो रूपं । इदं ग्राह्यमिदं नेत्येतावज्ज्ञानात्मकं मनस्तदेव बन्धरूपमेवेति ॥ ७ ॥

आतां बंधनलक्षण सांगतात. विषयांचें ग्रहण व सर्पादिकांचा त्याग करणें असें जें मनाचें स्वरूप ह्म० हें ग्राह्य आणि हें अग्राह्य अशा ज्ञानानें युक्त असणें त्याला बंध ह्मणावें. ॥ ७ ॥

मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः ॥
मनःकृतं कृतं लोके न शरीरकृतं कृतम् ॥८॥

मन इति । संसारस्य कारणं मन एव । अतएव मनः पुरुषः । मनसा कृतं तदेव कृतमिति ज्ञेयम् । निर्वासनेन मनसा शरीरकृतं न लगति मनोनिबन्धनत्वात्पापपुण्ययोरित्यर्थः ॥ ८ ॥

संसाराला मनच कारण आहे व पुरुषही मनच आहे. तसेंच मनानें केलें तें देवकृत असें समजावें. वासनारहित मन झालें असतां जें शरीरानें केलेलें तें केलेंनाहीं असें समजावें. कारण, पाप व पुण्य यांना मनाचें निबंधन आहे. ॥ ८ ॥

चित्तं कारणमर्थानां तस्मिन् सति जगत्रयम् ॥
तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ९ ॥

चित्तमिति । पदार्थानां कारणीभूतं चित्तमेव । चित्ते विद्यमाने जगतां त्रयं विद्यत एव । निर्वासने मनसि जगन्नास्त्येव । तस्मान्मनस एव प्रयत्नेन चिकित्सा कर्तव्या ॥ ९ ॥

सर्व पदार्थांना कारण चित्त आहे व तें आहे ह्मणून हें त्रैलोक्य आहे. तेव्हां तें नष्ट झालें असतां त्रैलोक्यही नष्ट झालें, असें समजावें. याकरितां त्या चित्ताची चिकित्सा करावी. ॥ ९ ॥

राम वासनया बद्धं मुक्तं निर्वासनं मनः ॥

तस्मान्निर्वासनीभावमाहराशु विवेकतः ॥ १० ॥

रामेति । हे राम वासनायां सत्यां बंधः निर्वासने मनसि मोक्षः तस्माद्विवेकेन मनसि वासनां निराकुरु ॥ १० ॥

वसिष्ठ ह्मणतात. रामा, वासनेनें मन युक्त झालें असतां बंध व वासनारहित मन झालें असतां मोक्ष होतो याकरितां विचारानें वासनेचें निराकरण करावें. ॥ १० ॥

यथाऽभ्रलेखा शशिनं सुधालेपं मषी यथा ॥
दूषयत्येव मेवांतर्नरमाशा पिशाचिका ॥ ११ ॥

यथेति । तृष्णाया एव वासनारूपत्वात्तां निन्दन्ति । हे राम आशारूपिणी पिशाचिका राक्षसी नरं जीवं दूषयति संसारं नयति । निर्मलस्य दूषणे दृष्टांतद्वयं । यथाभ्रलेखा चंद्रं मलिनयति । मषी च सौधम् ॥ ११ ॥

तृष्णा हीच वासना आहे ह्मणून तिची निंदा करितात. वसिष्ठ ह्मणतात, हे रामा, तृष्णा ही राक्षसी आहे ती जीवाला दूषित करिते ह्म० जन्ममरणाला घालते. याला दृष्टांत अभ्ररेखा जशी स्वच्छ चंद्राला मलीन करिते व माशिका ह्म० काजळ जसें चुन्यानें स्वच्छ केलेल्या घराला मलीन करिते त्याप्रमाणें. ॥ ११ ॥

अन्तर्मुखतया सर्वं चिद्वन्हौ त्रिजगत्तृणम् ॥
जुव्हतोन्तर्निवर्तेत राम चित्तादिविभ्रमः ॥ १२ ॥

अन्तरिति । संसारादिन्द्रियाणि प्रत्याहृत्य त्रैलोक्यरूपं तृणं ज्ञानाग्नौ जुव्हतो नरस्य चित्तादिसर्वो भ्रमः स्वयमेव निवर्तते न तत्र रथानरथयोगानपन्थोभवत्यथरथान्रथयोगान्पथः सृजत इति श्रुतेः ॥ १२ ॥

संसाराकडे लागलेलीं जीं इंद्रियें त्यांचा रोध करून त्रैलोक्य

ईच तृण, त्या तृणाचा ज्ञानाग्नीमध्यें जो होम करितो त्याचा, चित्त आदिकरून सर्वभ्रम आपोआप नष्ट होतो. ॥ १२ ॥

यदा न भाव्यते किञ्चिद्धेयोपादेयरूपवित् ॥
स्थीयेत सकलं त्यक्त्वा तदा चित्तं न जायते॥१३॥

यदेति। चित्तनाशोपायमुपदिशति । यदा हेयोपादेयपदार्थान्मिथ्याभिभूताञ्ज्ञात्वा किंचिन्न स्मर्यते तदा स्वत एव चित्तं विलीयत इत्यर्थः ॥ १३ ॥

आतां चित्ताचे नाशाविषयीं उपाय सांगतात. जेव्हां जीव हेय (टाकण्यास योग्य) व उपादेय (ग्रहण करण्यास योग्य) असे सर्व पदार्थ मिथ्या आहेत; असें जाणून कांहींच स्मरण करीत नाहीं तेव्हां स्वतःच तें चित्त लीन होतें. ॥ १३ ॥

घोरं जाग्रन्मयं चित्तं मूढं स्वप्ने व्यवस्थितम् ॥
शान्तं सुषुप्त्यवस्थायां त्रिभिर्हीनं मृतं भवेत् ॥१४॥

घोरमिति । जाग्रदवस्थायां तु चित्तं घोरं परमदुःसहं स्वप्नावस्थायां मूढं तिष्ठति सुषुप्त्यवस्थायां शान्तं तिष्ठति । तुरीयावस्थायां नश्यति तदर्थं तुरीया भावनीया ॥ १४ ॥

आतां अवस्थापरत्वें चित्ताचें स्वरूप सांगतात. जागेपणीं चित्त घोर ह्मणजे परमदुःख देणारें असतें. स्वप्नांत तें मूढ असतें आणि निद्राकालीं शांत असतें. आणि तुरीय ह्म० चवथ्या अवस्थेंत नष्ट होतें. याकरितां तुरीय अवस्थेतील चित्ताविषयीं यत्न करावा. ॥ १४ ॥

विलाप्य पङ्कं कतकं रजोप्सु विलयं नयेत् ॥
यथात्मनि तथा विद्धि विलाप्य विलयं मनः ॥१५॥

विलाप्येति । यथा जले वर्तमानं रजः कतकफलं विलाप्य पङ्काभावं नयति जलं च शुद्धं करोति तथा मनोप्या-

त्मनि विलाप्य विलयं नाशं नयेत् । आत्मानं च शुद्धं कुर्यात् ॥ १५ ॥

कतक फल ह्मणजे निवळीचें बीज, जसें जलांतील मलाशीं युक्त होऊन पुढें जलाला मलरहित करितें तसें मन आत्म्याशीं युक्त होऊन चित्ताचा नाश करितें. व पुढें आत्म्यालाही शुद्ध करितें. १५

चित्तं जानीहि संसारो बन्धश्चित्तमुदाहृतम् ॥
पादपः पवनेनैव देहश्चित्तेन चाल्यते ॥ १६ ॥

चित्तमिति । हे राम संसारश्चित्तमेव जानीहि ॥ चित्तमेव बन्धः देहोऽपि चित्तेनैवेतस्ततो भ्रमते । यथा वायुना बाध्यमानस्थिरो वृक्षस्तद्वत् ॥ १६ ॥

वसिष्ठ ह्मणतात, हे रामा, चित्त हेंच संसार आणि तें चित्तच बंध आहे. जसा वायु वृक्षाला हालवितो तसें चित्त देहाला इकडून तिकडे भ्रमण करण्याला लावितें ॥ १६ ॥

हस्तं हस्तेन संपीड्य दन्तैर्दन्तांश्च पीडयन् ॥
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ १७ ॥

चित्तमेकं न शक्नोति जेतुं स्वातंत्र्यवर्ति यः । ध्यानवार्तादीन् सर्वानवयवान् स्थिरीकृत्य एकांतमुपविश्य प्रथमं मनोजयं कुर्यात् । मुक्तिसाधनानां मनोजयस्य प्राथम्यादित्यर्थः ॥ हस्तं हस्तेनेति स्पष्टम् ॥ १७ ॥

आतां मनोजयाविषयीं सांगतात. अगोदर सर्व अवयवांचें नियमन करून एकांतीं बसून मनाला जिंकावें. कारण, मुक्तीला जीं साधनें सांगितलीं आहेत; त्यांत मनोजय हें पहिलें आहे; करितां त्याविषयीं अगोदर यत्न पाहिजे. तो असा एका हातानें दुसरा हात धरून वरचे व खालचे दांत एकत्र करून (दांत घट्ट मिटून) सर्व अंगांचें आकलन करून व्यापाररहित होऊन जेणेंकरून एकाग्रता होईल तसें करावें. ॥ १७ ॥

चित्तमेकं न शक्नोति जेतुं स्वातंत्र्यवर्ति यः ॥
ध्यानवार्तां वदन्मूढः सकल्लोके न लज्जते ॥१८॥

चित्तमिति । यः पुनर्ध्यानवार्तामेव वदन् सन् स्वतंत्रं प्रवर्तमानशीलं चित्तं जेतुं न शक्नोति स मूढो न लज्जते कथं । चित्तजयेऽसमर्थो ध्यानवार्तां वदन्मूढ इत्यर्थः ॥ १८ ॥

स्वतंत्र होऊन ज्याला एक मन जिंकतां आलें नाहीं; त्या मूर्खाला मी सर्व अवयवादिक जिंकतों असें लोकांमध्यें बोलण्यास व ध्यान धारणा इत्यादिकांबद्दल चर्चा करण्यास लज्जा कां वाटत नाहीं, तर वाटली पाहिजे. ॥ १८ ॥

एक एव मनोदेवो देवः सर्वार्थसिद्धिदः ॥
अनेन विफलः क्लेशः सर्वेषां तज्जयंविना ॥१९॥

एक इति । मनोलक्षणो देव एवं विजितः सर्वार्थसिद्धिदो भवति । यतस्तस्मान्मनसो जयं विना साधनांतरक्लेशो व्यर्थ एवेत्यर्थः ॥ १९ ॥

एक मनोरूपी देवता जिंकली असतां सर्व अर्थाची सिद्धि होते. आणि जर त्याला जिंकल्यावांचून इतर साधनें करील तर मात्र त्या श्रमाचें फल न होतां तो श्रम व्यर्थ जाईल. ॥ १९ ॥

अनुद्वेगः श्रियो मूलमनुद्वेगात्प्रमुच्यते ॥
जन्तोर्मनोजयादन्यस्त्रैलोक्यविजयस्तृणम् ॥२०॥

अनुद्वेगइति । इष्टे वस्तुनि अप्राप्ते य उद्वेगाभावः स एव मोक्षलक्ष्म्याः कारणं नान्यत् । अतएव मनोजयं विना अन्यपदार्थजये प्रयत्नो मिथ्येत्यर्थः ॥ २० ॥

इष्ट वस्तु प्राप्त झाली नसतां उद्वेग न होणें हेंच मोक्षलक्ष्मीचें कारण ह्मणजे साधन आहे दुसरें नाहीं; याकरितां त्याला आश्रयभूत जें मन त्याला जिंकल्यावांचून अन्य पदार्थ जिंकणें व्यर्थ आहे. ॥२० ॥

सत्सङ्गो वासनात्यागोऽध्यात्मविद्याविचारणम् ॥
प्राणस्पन्दनिरोधश्चेत्युपायाश्चेतसो जये ॥ २१ ॥

तज्जये साधनमाह । सत्सङ्ग इति । मनसो जये चत्वार उपायाः । एकः सतां संगः । तृष्णात्यागः । ब्रह्मविद्याया वेदांतशास्त्रस्य विचारः । प्राणायामश्चेति । अतश्चतुर उपायान्कुर्वतोऽल्पकाले मनसो जयो भवति ॥ २१ ॥

मनाच्या जयाविषयीं उपाय सांगतात. मनोजयाविषयीं चार उपाय आहेत ते असे, सत्संगति करणें, वासनेचा त्याग, वेदांतशास्त्राचा विचार करणें, आणि प्राणायाम हे उपाय केले असतां अल्पकालानें मनाला जिंकतां येईल. ॥ २१ ॥

पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः ॥
उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥ २२ ॥

मनोजयस्य फलमाह। पूर्ण इति । जिते मनसि सर्वं सुधारसैः पूर्णं भवति तत्रदृष्टान्तः । सोपानच्चरणस्य यथा सर्वा भूमिश्चर्मावृतेव भाति तद्वत् ॥ २२ ॥

मन जिंकलें असतां सर्व जगत् अमृतरसानें पूर्ण आहे असें भासतें. यास दृष्टांत पायांमध्यें जोडा किंवा वाहाणा घालून चाललें असतां त्याला जशी सर्व भूमि चर्मवेष्टित आहे अशी भासते त्याप्रमाणें. ॥ २२ ॥

नाहं ब्रह्मेति संकल्पात्सुदृढं बध्यते मनः ॥
सर्वं ब्रह्मेति संकल्पात्सुदृढं मुच्यते मनः ॥ २३ ॥

नाहमिति । अहं संसारीति भावनया मनसो बन्धः । अहं ब्रह्मेति भावनया मनसो मुक्तिरित्यर्थः ॥ २३ ॥

मी ब्रह्म नाहीं संसारी आहें अशा संकल्पानें मन बद्ध होतें.

आणि सर्व ब्रह्मच आहे अशा भावनेनें मनाला मुक्ति होते. याकरितां निरंतर ब्रह्मभावना करावी. ॥ २३ ॥

चित्ते त्यक्ते लयं याति द्वैतमेकं च सर्वतः ॥
शिष्यते तु परं ब्रह्म शान्तं नित्यमनामयम् ॥ २४ ॥

चित्त इति । मनसि जिते सति संसारो न भासते । एकं स्वजातियविजातीयस्वगतभेदरहितं अविनाशि व्यापकं पूर्णं ब्रह्मैव सर्वतो भाति ॥ २४ ॥

चित्ताचा त्याग केला असतां द्वैत नष्ट होतें ह्म० मन जिंकलें असतां संसार भासत नाहीं, तर एक, सजातीय विजातीय स्वगतभेदरहित असें, व ज्याचा तीन कालींही बाध नाहीं, व व्यापक, असें पूर्ण ब्रह्मच सर्वत्र भासतें. ॥ २४ ॥

चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योः सचेतसः ॥
यो भवेत्परमानन्दः केनासावुपमीयते ॥ २५ ॥
इति लघुयोगवासिष्ठसारे मनोलयं नाम चतुर्थं प्रकरणम् ॥

चिदिति । ब्रह्मभावगतस्य जरामरणरहितस्य ज्ञानिनो यः परमानन्दो भवेत्तस्योपमा नास्ति । ततोनेनैवानुभावि ज्ञेयो नान्येनाब्रह्मज्ञेनेत्यर्थः ॥ २५ ॥ इति लघुयोगवासिष्ठसारटीकायां मनोलयं नाम चतुर्थं प्रकरणं ॥

ब्रह्मभावाप्रत गेलेला व जरामरणरहित असा जो ज्ञानी त्याला जो आनंद होतो त्याला उपमा नाहीं, तर त्याचा अनुभव घेऊनच जाणावा. ब्रह्मज्ञान्यावांचून तो जाणणें अशक्य आहे. ॥२५॥ याप्रमाणें मनोलयनामक चतुर्थ प्रकरण समाप्त झालें.

---

## अथ वासनोपशमनं नाम पंचमं प्रकरणम्

वसिष्ठ उवाच ॥ राम स्वात्मविचारोयं कोऽहं

स्यामिति रूपकः ॥ चित्तदुर्द्रुमबीजस्य दहने दहनः स्मृतः ॥ १ ॥

इदानीं वासनोपशमः कथ्यते । रामेति । हे राम अहं इति ईदृशो यः स्वात्मविचारः स एव चित्तलक्षणस्य दुष्टद्रुमस्य दुःप्रापकवृक्षस्य यद्बीजं वासनात्मकं तस्य दाहार्थं वैश्वानरो ज्ञेयः । आत्मविचारमंतरा वासना न क्षीयत इत्यर्थः ॥ १ ॥

आतां वासनोपशम सांगतात.

वसिष्ठ ह्मणतात, हे रामा, मी कोण आहें असा जो स्वात्मविचार तोच चित्तरूपी जो दुःख देणारा वृक्ष त्याचें वासनारूप जें बीज त्याला दहन करण्याविषयीं अग्नि आहे असें जाणावें. कारण आत्मविचारावांचून वासनेचा क्षय होत नाहीं. ॥ १ ॥

विचारदर्पणे लग्नां धियं धैर्यधुरं गताम् ॥
आधयो न विलुम्पन्ति वाताश्चित्रलतामिव ॥ २ ॥

विचारेति । आधयो मनःपीडाः विचारलक्षणे मुकुरे लग्नामतएव धैर्यभारं प्राप्तां बुद्धिं न बाधन्ते । तत्र दृष्टान्तः यथा आलेख्ये वर्तमानां लतां वाताः न बाधन्ते ॥ २ ॥

विचाराचे ठिकाणीं एकदां बुद्धि स्थिर झाली ह्मणजे आधि (मानासिक व्यथा)पासून त्या बुद्धीला पीडा होत नाहीं. यास दृष्टांत, चित्रांतील झाडें किंवा वल्ली ह्यांस जशी वायूपासून पीडा होत नाहीं त्याप्रमाणें. ॥ २ ॥

विचारोऽध्यात्मविद्यानां ज्ञानं तत्वविदो विदुः ॥
ज्ञेयं तस्यान्तरे वाऽस्ति माधुर्यं पयसो यथा ॥३॥

विचार इति । ब्रह्मविद्यानां यो विचारस्तमेव ज्ञानं बुधा

जानन्ति । ज्ञेयं ब्रह्मज्ञानमध्य एवास्ति । यथा दुग्धमध्ये माधुर्यमास्ति तद्वत् ॥ ३ ॥

अध्यात्मविद्येचा जो विचार त्यालाच ज्ञाते ज्ञान ह्मणतात. व जाणण्यास योग्य असें त्यामध्येंच आहे. यास दृष्टांत जसें दुग्धामध्यें अविट माधुर्य आहे त्याप्रमाणें. ॥ ३ ॥

विचारेण परिज्ञातस्वभावस्योदितात्मनः ॥
अनुकंप्या भवन्तीह ब्रह्मविष्णुशिवादयः ॥४॥

विचारेणाति । आत्मविचारेण परिज्ञातः स्वस्य ब्रह्मणो भावः सत्ता येन ईदृशस्य अतएव उदितात्मनः प्रकाशीभूतब्रह्मसाक्षात्कारस्य तस्य ब्रह्मादयोऽपि देवा अनुकंप्या भवंति कस्मात् ब्रह्मज्ञत्वात् ॥ ४ ॥

आत्मविचारानें ज्यानें ब्रह्मभाव जाणला आहे व ज्याला ब्रह्मसाक्षात्कार झाला आहे तो, ब्रह्मा, विष्णु, शिव ह्यांच्यावरही कृपा करण्याविषयीं समर्थ आहे. कारण ब्रह्म जाणतो ह्मणून.॥४॥

किमिदं विश्वमखिलं किं स्यामहमिति स्वयम् ॥
विचारनिरतस्यैतदसदेव भवेज्जगत् ॥ ५ ॥

किमिदमिति । किमिदं विश्वमहं च क इति निरन्तरं विचारशीलस्य पुंस एतज्जगदसदेव भवेन्न भासते असत्वादित्यर्थः ॥ ५ ॥

दृश्य जें जगत् हें काय आहे व मी कोण आहें असा निरंतर विचार करणाराला हें संपूर्ण जगत् खोटें आहे असें वाटेल खरें भासणार नाहीं. ॥ ५ ॥

यस्य मौर्ख्यं क्षयं यातं सर्वं ब्रह्मेति भावनात् ॥
नोदेति वासना तस्य प्राज्ञस्याम्बुमतिर्मरौ ॥३॥

**यस्येति। यस्य सर्वं खल्विदं ब्रह्मेति श्रुत्यर्थावगमान्मूढत्वं क्षीणं तस्य पुनर्वासना नोदेति। यथा मरौ निर्जलदेशे विदुषो जलमतिर्न भवति ॥ ६ ॥**

ज्याचें "सर्वं खल्विदं ब्रह्म" हें संपूर्ण ब्रह्मच आहे अशा वेदवाक्यानें अज्ञान नष्ट झालें आहे त्या ज्ञान्याला वासनाच उत्पन्न होत नाहीं. यास दृष्टांत, निर्जल जो मरुदेश त्याठिकाणीं जशी जलाची विद्वानांस इच्छा होत नाहीं त्याप्रमाणें. ॥ ६ ॥

वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ॥
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥ ७ ॥

**वासनेति। प्राणस्पन्दस्य निरोधनाद्वासनानाशः। वासनानाशाच्च चित्तं स्वभावं प्राप्नोति ब्रह्मैव भवतीत्यर्थः ॥ ७ ॥**

प्राणवायूच्या निरोधानें वासनेचा नाश होतो व वासनानाश झाला असतां दूषित जें चित्त तें शुद्ध होऊन आपल्या खऱ्या स्वरूपाला पावतें म्ह० ब्रह्मच होतें. नंतर कोणतेंही कर्म केलें असतां बाधक होत नाहीं. ॥ ७ ॥

साधुसङ्गमसच्छास्त्रपरोभवसि सन्मते ॥
तद्दिनैरेव नो मासैः प्राप्नोषीमां परां धियम् ॥ ८ ॥

**साध्विति। हे सन्मते विचारवति बुद्धे साधुसङ्गमब्रह्मविद्याशास्त्रपरायणो यदि भवसि तर्हि कतिपयैरेवादिनैर्ब्रह्मनिष्ठां बुद्धिं प्राप्नोषि न मासाद्यपेक्षया ॥ ८ ॥**

हे सन्मते रामा, जर तूं, साधुसमागम हेंच ब्रह्मविद्याशास्त्र आहे; असें मानून तो समागम करशील तर कांहीं दिवसांनीं तरीं तुला ब्रह्मबुद्धि प्राप्त होईल. ॥ ८ ॥

सत्सङ्गव्यवहारित्वाद्भवभावनवर्जनात् ॥

शरीरनाशदर्शित्वाद्भावना न प्रवर्तते ॥ ९ ॥

सत्पुरुषसङ्गत्या सद्व्यवहारात्संसारचिंतानिवर्ततेन शरीरस्य नश्वरत्वभावनाच्च वासना क्षीयते । वासनाक्षये साधनत्रयमित्यर्थः ॥ ९ ॥

सत्पुरुषाच्या संगतीनें व त्याच्याशीं व्यवहार केल्यानें संसारचिंता नष्ट होते. केवळ शरीर हें नश्वर आहे अशा भावनेनें वासनेचा क्षय होत नाहीं व वासनेचा क्षय झाल्यावांचून संसारनिवृत्ति होत नाहीं ह्मणून सत्समागम अवश्य करावा. ॥ ९ ॥

दृढभावानुसन्धानाद्विमूढा अपि राघव ॥
विषं नयन्त्यमृततताममृतं विषतामपि ॥१०॥

दृढेति । दृढस्य भावस्य ब्रह्मरूपानुसंधानान्मूर्खा अपि विषं परिणामे दुःखदत्वाद्विषतुल्यं संसारममृततां नयन्ति ब्रह्मस्वरूपतां प्रापयन्ति । अमृतमज्ञानदशायाममृतवद्भासमानं संसारसुखं विषतां नयन्ति ॥ १० ॥

वसिष्ठ ह्मणतात. हे रामा, ब्रह्मस्वरूपाच्या दृढतर अनुसंधानानें मूर्खही, विषरूप ह्मणजे दुःखद जो संसार त्याला अमृतरूप जें ब्रह्मस्वरूप त्याप्रत पाववितात व अज्ञान दशेमध्यें अमृताप्रमाणें भासमान जें विषयसुख तें ज्ञानानें विषवत् ह्मणजे विषाप्रमाणें दुःख देणारें असें मानतात. ॥ १० ॥

सत्यभावेन दृष्टोऽयं देहोदेहोभवत्फलम् ॥
दृष्टस्त्वसत्यभावेन व्योमतां याति देहकः ॥११॥

सत्येति । सत्यत्वेन दृष्टोयं देहः अलमत्यर्थं देहो भवति । दिह उपचये अस्य धातोः प्रयोगः । उपचयकरो भवति देहपरंपराकरः संसारप्रापको भवतीत्यर्थः। स एव देहः असत्यत्वेन दृष्टः सन् शून्यतां याति । न भासते मोक्षंददाति ॥११॥

देह खरा आहे अशा बुद्धीनें पाहिलें तर तो देह संसार देणारा होतो कारण दिह धातु उपचय या अर्थी आहे. तेव्हां तो उपचय करणारा ह्मणजे संसार देणारा असा अर्थ सिद्ध होतो आणि तोच देह खोटा आहे अशा बुद्धीनें पाहिला तर मोक्ष देणारा आहे करितां देहावर आसक्ति ठेवूं नये. ॥ ११ ॥

**सुखतल्पगतो येन स्वप्ने देहेन दिक्तटान् ॥**
**परिभ्रमसि हे राम स देहस्ते क सांप्रतम्॥१२॥**

**सुखेति । सतो देहस्यासत्त्वेन दृष्टांतः । हे राम त्वं स्वप्नावस्थायां वर्तमाना येन देहेन दिशामन्तान् भ्रमासि स देहो जाग्रदवस्थायां क याति । स्वप्नवदविद्यादशायामसत्यमेव देहादि भासत इत्यर्थः ॥ १२ ॥**

देह दृष्ट असतां तो खोटा कसा याविषयीं दृष्टांत सांगतात. वसिष्ठ ह्मणतात, हे रामा, स्वप्नावस्थेंत जो देह अनेक ठिकाणीं गमन करितो तो देह जागा झाल्यावर जसा नसतो त्याप्रमाणें अज्ञान अवस्थेंतील जो हा दृष्ट देह तो ज्ञान प्राप्त झाल्यावर खोटा भासतो. ॥ १२ ॥

**देहोहमिति धीस्त्याज्या सर्वनाशेऽप्युपस्थिते ॥**
**स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी॥१३॥**

**देह इति । भव्येन मुमुक्षुणा सर्वनाशे प्राप्तेऽपि देहोहमिति बुद्धिर्देहात्ममतिः सर्वथा त्याज्या । यथा साधुना सदाचारेण कुकुरमांससहिता चांडाली न स्प्रष्टव्या ॥ १३ ॥**

**मुमुक्षु जो आहे त्यानें सर्व नाश होत असला तरी "देहोऽहं" (देहच आत्मा आहे) अशी बुद्धि करूं नये. यास दृष्टांत, सदाचरण करणारानें जशी कुकुरमांस ग्रहण केलेल्या चांडाळणीला स्पर्श करूं नये त्याप्रमाणें मुमुक्षूनें अशा बुद्धीला स्पर्श करूं नये. ॥ १३ ॥**

ब्रह्मैकं भावयन् साधुः शान्तस्तिष्ठन्गतव्यथः ॥
ततस्तेऽसावहंभावः स्वयमेव विनश्यति ॥१४॥

ब्रह्मेति । एकं ब्रह्मैव भावयन् गतदुःखो यदा शांतस्तिष्ठति तदा स्वयमेव देहात्मबुद्धिर्विलीयत इत्यर्थः ॥ १४ ॥

आतां बुद्धि केव्हां नष्ट होते याविषयीं सांगतात. ब्रह्मभावनेनें सर्व दुःखें नष्ट होऊन जेव्हां हा प्राणी शांत होतो तेव्हां ती देहात्मबुद्धि आपणच नष्ट होते. ॥ १४ ॥

सर्वत्रैक्यावबोधेन स्वस्थोन्तःशीतलस्तदा ॥
निरहंकृतिराकाशविशदस्तेन संस्थितः ॥ १५ ॥

सर्वत्रेति । सर्वत्र आब्रह्मादिस्थावरांते संसार एकं ब्रह्मैव तत्र तदाकारेण भासते नान्यदिति दृढभावनयान्तःशीतलः आनन्दमग्नः सन्स्वस्थो भवति तदाहंकारनाशादाकाशवन्निर्मलो देहात्मबुद्धिरहितो भवति । ब्रह्मभावनां विना देहात्मबुद्धिर्न निवर्तत इत्यर्थः ॥ १५ ॥

तसेंच ब्रह्मापासून स्थावरापर्यंत जो हा दृष्ट संसार हा ब्रह्मच आहे दुसरें कांहीं नाहीं अशा दृढ भावनेनें अंतःकरण शांत व आनंदयुक्त होऊन जेव्हां स्वस्थ होतो, तेव्हां अहंकार नष्ट होऊन आकाशाप्रमाणें स्वच्छ होतो ह्म० देहात्मबुद्धिरहित होतो. कारण ब्रह्मभावनेवांचून देहात्मबुद्धि नष्ट होत नाहीं ह्मणून ती भावना निरंतर करावी. ॥ १५ ॥

अन्तः शीतलतां याहि लब्धायां शीतलं जगत् ॥
अन्तस्तापोपतप्तानां दावदाहमयं जगत् ॥१६ ॥

इति लघुयोगवासिष्ठसारविवरणे वासनोपशमनं नाम पञ्चमं प्रकरणम् ॥

अन्तरिति । ब्रह्मभावनयान्तःशीतलं चेत्तर्हि जगदपि शीतलं । अंतस्तृष्णया परिभूतानां तु सर्वसंसारोग्निवद्दाहक एव भासते । पित्तपीडितस्य जिव्हायां शर्करायां अन्तःशीतलत्वमपि यथा दाहकं तद्वदित्यर्थः ॥ १६ ॥ इतिलघुयोगवासिष्ठसारविवरणे वासनोपशमनं नाम पञ्चमं प्रकरणम् ॥

ब्रह्मभावनेनें अंतःकरण शांत झालें ह्मणजे सर्व जगत् शांत आहे असें दिसतें आणि तृष्णेनें अंतःकरण तप्त झालें असतां त्यांना हा संसार अग्निप्रमाणें दाहक होतो. पित्तानें पीडिताला शर्करेनें जसें आंत थंड झालें तरी बाहेरून दाहकत्व असतें त्याप्रमाणें. ॥१६॥ याप्रमाणें हें वासनोपशमन प्रकरण समाप्त झालें.

# अथ षष्ठमात्ममननं प्रकरणम्

शुद्धो निरञ्जनोऽनन्तो बोधोहं प्रकृतेः परः ॥
चेष्टमान इमं देहं पश्याम्यन्यशरीरवत् ॥१॥

योब्रह्मभावमादिश्य भक्तानां स्थिरचेतसाम् ॥ आनंदरूपमाधत्ते तं नृसिंहं सदा नुमः ॥ १ ॥ इदानीं मननं निरूपयति । शुद्ध इति । अहमिमं देहमन्यशरीरवत्पश्यामि देहोहं न भवामीत्यर्थः । किंभूतोहं शुद्धः गुणातीतः निरंजनः मायातीतः । अनंतः शाश्वतः । बोधो ज्ञानरूपः प्रकृतेर्मायाया रन्योप्याभासिकदेहसंबंधाच्चेष्टमानो व्यापारं कुर्वल्लोकदृष्या ॥ १ ॥

आतां मननप्रकार सांगतात. मी, शुद्ध, गुणाहून निराळा, मायातीत, निरंजन, शाश्वत असा असून भासमान जो देह त्याचे संबंधानें व्यवहार करणारा असा हा देह अन्य शरीराप्रमाणें पहातों. कारण मला ब्रह्मावांचून दिसत नाहीं असें निरंतर मनन करावें. ॥ १ ॥

एते हि चिद्विलासान्तामनोबुद्धीन्द्रियादयः ॥
असन्तः सर्व एवाहो ह्यवधानं विना स्थिताः ॥२॥

एत इति । यत एते मनोबुद्धीन्द्रियादयः सर्वे भासाः असन्तोविद्यमानाः सन्तोऽवधानं विना सावधानमन्तरेण स्थिताः भासन्ते । कीदृशाः चिद्विलासांताः चिद्विलासो ब्रह्मानुभव एवान्तो नाशो येषां ते ब्रह्मसाक्षात्कारेण न भासन्त इत्यर्थः ॥ २ ॥

आतां हे जे, मन, बुद्धि, इंद्रिय आदिकरून भाव आहेत ते खोटे असतांही अभावध अवस्थेंत खरे भासतात, परंतु यासर्वांचा ब्रह्मामध्यें लय आहे; करितां ते खोटे आहेत व ह्मणूनच ब्रह्मसाक्षात्कार झाल्यानंतर ते भासमान राहात नाहींत. ॥ २ ॥

आपद्यचलचित्तोऽस्मि जगन्मित्रं च संपदि ॥
भावाभावविहीनोऽस्मि तेन जीवाम्यनामयम् ॥३॥

आपदिति । यतोऽहमापादि दुःखापत्तावचलचित्तः स्थिरमना अस्मि । संपन्नदशायां जगन्मित्रं विश्वोपकारकोऽस्मि । भावाभावावुदयहानी तद्रहितोऽस्मि तेन कारणेन हर्षविषादराहित्येनानामयं निर्दुःखं यथा तथा जीवामि ॥ ३ ॥

मी आपत्कालीं स्थिरचित्त व संपत्कालीं विश्वावर उपकार करणारा असा असून, उदय व हानी यांनीं रहित असा आहें. व त्या उभयांचीं कारणें जे हर्ष आणि विषाद तद्रहित सुखानें व रोगरहित असा आहें. ॥ ३ ॥

निरीहोऽस्मि निराशोऽस्मि खवत्स्वच्छोऽस्मि निस्पृहः॥
शान्तोस्म्यहमरूपोऽस्मि चिरायुरचलस्थितः ॥४॥

निरीह इति । ईदृशोस्मि कीदृशो निरीहः ईहा संसारिकी चेष्टा सा निर्गता यस्य । निराशस्तृष्णारहितः। खवदाकाशव-

त्स्वच्छो निर्मलः । विषयवासना स्पृहा तद्राहितः । शांतः स्थिरमनाः । अरूपः रूपग्रहणमन्येषामुपलक्षणां । रूपरसगंधस्पर्शशब्देष्वनासक्तः । अतएव चिरायुरविनाशी । अचलः चांचल्यहीनः एवंविधःस्थितोऽस्मि ॥ ४ ॥

आतां मी कसा आहें तें सांगतों. मी निरीह ह्मणजे सांसारिकीचेष्टारहित आहें. तशीच मला आशा नाहीं. आकाशाप्रमाणें निर्मल आहें व निस्पृह ह्मणजे विषयवासनारहित आहें. शांत ह्मणजे स्थिरमनाचा आहें. मला रूप नाहीं, मी चिरायु आहें व अचलही आहें. ॥ ४ ॥

चिदेव पंचभूतानि चिदेव भुवनत्रयम् ॥
विज्ञातमधुना सम्यगहमेव चिदेव हि ॥५॥

चिदिति । अधुना मया सम्यक् समीचीनं विज्ञातं किं पंचभूतानि पृथिव्यादीनि चिदेव ब्रह्मैव । भुवनत्रयं पंचभूतकार्यमपि चिदेव अहमपि चिदेव । सर्वं खल्विदं ब्रह्मेति श्रुतेः ॥ ५ ॥

आतां मला जें खरें ज्ञान झालें आहे तें सांगतों कीं, भूमिआदिकरून जीं पंचभूतें आहेत तीं सर्व ब्रह्मच आहेत व त्यांचें कार्य जें त्रिभुवन तेंही ब्रह्मच; मीही ब्रह्मस्वरूप आहें याविषयीं प्रमाण "सर्वं खल्विदं ब्रह्म" ह्मणजे हें सर्व ब्रह्मच आहे अशी श्रुति आहे. ॥ ५ ॥

सर्वातितः सर्वगम्यः खमिवायमहं स्थितः ॥
यत्तदस्ति तदेवाऽस्मि वक्तुं शक्नोमि नेतरत् ॥६॥

सर्वेति । अयं प्रत्यक्षोऽहं सर्वातीतः सर्वं भासमानं जगत्तस्मादतीतः । संसाररूपो नाहमतः सर्वगो व्यापकः खं वियदिव स्थितः । वास्तवं तद्ब्रह्म यदस्ति तदेवास्मि । ओंतत्स-

दिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति भगवद्वचनात् तच्छब्देन ब्रह्म तदहमस्मि । इतरत्ततो वक्तुं न शक्नोमि ॥ ६ ॥

आतां प्रत्यक्ष जो मी आहें तो ह्या भासमान जगताहून निराळा आहें. ह्मणजे संसाररूपी नाहीं. ह्मणूनच आकाशाप्रमाणें सर्वव्यापक आहें. वास्तविक पाहिलें असतां जें ब्रह्म आहे तेंच मी आहें याविषयीं "तत्वमसि" इत्यादि श्रुति प्रमाणें आहेत. त्या ब्रह्मावांचून इतर आहे असें ह्मणण्यास मी समर्थ नाहीं. ह्म० ब्रह्मावांचून कांहीं नाहीं. ॥ ६ ॥

मय्यनन्तचिदम्भोधावाश्चर्यं जीववीचयः ॥
समुल्लसन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥७॥

मयीति । इदमाश्चर्यं किं तत् यदनन्तचिदम्भोधौ अपारज्ञानसमुद्रे मयि जीववीचयो जीवलक्षणाऊर्मयः समुल्लसंत्युत्पद्यन्ते । खेलन्ति व्यापारं कुर्वन्ति । प्रविशन्ति पुनस्तत्रैव लीयन्ते । स्वभावतः वीचीनामिव जीवानां स्वभावोयमित्यर्थः ॥७॥

आतां हें आश्चर्य आहे कीं, अपार ज्ञानसमुद्र जो मी त्या माझे ठेकाणीं जीवरूपी ज्या लाटा त्या उत्पन्न होतात. तशाच खेळता-त ह्म० व्यापार करितात, व तेथेंच लीन होतात. परंतु हीं जीं सर्व कार्यें होतात हा त्या जीवरूपी लाटांचा स्वभावच आहे. दुसरें कांहीं नाहीं. ॥ ७ ॥

मय्यनन्तचिदम्भोधौ विश्ववीच्यादिकल्पना ॥
उदेतु वाऽस्तमायातु न मे वृद्धिर्न च क्षयः ॥८॥

मयीति । अनन्तचिदम्भोधौ अनन्तज्ञानसमुद्रे मयि आत्मने विश्ववीच्यादिकल्पना संसाररूपलहरी कल्पना उदेतु अथवास्तं नाशमायातु । विश्वरूपोर्मीणामुदये क्षये वा मे मम वृद्धिर्नवा क्षयोऽस्ति । कस्मात्पूर्णत्वादित्यर्थः ॥ ८ ॥

आतां अनंत ज्ञानसमुद्र जो मी त्या माझे ठिकाणीं जी हीं संसाररूपलहरीची कल्पना ती उत्पन्न झाली किंवा लीन झाली तरीं त्या योगानें माझी वृद्धि किंवा क्षय हीं होत नाहींत; कारण पूर्ण ब्रह्मस्वरूपी मी आहें ह्मणून त्यांचा प्रभाव चालत नाहीं. ॥ ८ ॥

**मदज्ञानोचितं विश्वं मय्येव लयमागतम् ॥**
**अपरोक्षचिदानंदसाम्राज्यमधुनाऽस्म्यहम् ॥९॥**

**मदिति । ममात्मनः अज्ञानेन उदितं विश्वं मय्यात्मनि ज्ञाते सति लयं नाशं प्राप्तं अतोऽधुना अपरोक्षः यश्चिदानंदः स एव साम्राज्यं ऐश्वर्यं तद्रूपोऽहमास्मि ॥ ९ ॥**

आत्म्याच्या अज्ञानानें उत्पन्न झालेलें जें विश्व तें आत्म्याचें खरें ज्ञान झालें असतां नाश पावतें; ह्मणून प्रत्यक्ष जो चिदानंद तेंच सामराज्य ह्मणजे ऐश्वर्य ज्याचें असें जें ब्रह्म तद्रूपी मी आहें. ॥ ९ ॥

**सर्वभूतांतरस्थाय नित्यमुक्तचिदात्मने ॥**
**प्रत्यक्चैतन्यरूपाय मह्यमेव नमोनमः ॥१०॥**
**इति लघुयोगवासिष्ठसारे षष्ठं प्रकरणम् ॥**

**सर्वेति । एवं विधाय मह्यं ममात्मने एवं नमोनमः । कथं भूताय सर्वभूतांतरस्थाय सर्वेषां भूतानां अंतरे मध्येंतर्यामिरूपेण स्थिताय । तथा नित्यश्चासौ चिदात्मा ज्ञानरूप आत्मा तस्मै । प्रत्यक्चैतन्यरूपाय । प्रतिदेहमंचतीति प्रत्यङ् अतएव चैतन्यस्वरूपस्तस्मै । मदतिरिक्ताभावान्मह्यमेव नम इत्यर्थः ॥ १० ॥ इति योगवासिष्ठसारे विवरणे आत्ममननं नाम षष्ठं प्रकरणम् ॥**

सर्वभूतांचे अंतर्यामीं राहणारा, नित्यमुक्त, चिदात्मा, आणि प्रत्यक् चैतन्यरूपी इत्यादि विशेषणांनीं युक्त जें ब्रह्म तत्स्वरूपी जो मी त्या मला नमस्कार असो. ॥ १० ॥ याप्रमाणें आत्ममनन नामक सहावें प्रकरण समाप्त झालें.

# अथात्मनिरूपणं नाम सप्तमं प्रकरणम्.

वसिष्ठउवाच॥ बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्जितः॥ कर्ता बहिरकर्तान्तर्लोके विहर राघव ॥ १ ॥

आत्मनिरूपणमाह। बहिरिति। हे राघव एवंविधः सल्लोके विहर संसारव्यापारं कुरु। कीदृशः बहिः कृत्रिमः संरंभः उद्यमो यस्य स तथा। हृदि मनसि संरंभेणोद्यमेन वर्जितः अतएव लोकदृष्ट्या बहिरेव कर्ता अन्तर्हृदि तु अकर्ता देहाभिमानादिरर्थः॥ १ ॥

आतां आत्मनिरूपण सांगतात.

वसिष्ठ ह्मणतात, हे रामा, या प्रकारें लोकांमध्यें वर्तन ठेव. कीं लोकदृष्टीनें बाहेर उद्योगी आहे असें दिसावें परंतु हृदयांत अकर्ता ह्म० उद्योगरहित असें असावें. ह्मणजे देहाभिमान रहित असावें. ॥ १॥

अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः॥
बहिः सर्वसमाचारो लोके विहर राघव ॥२॥

अन्तरिति। हे राघव एवंविधो लोके विहर व्यवहारं कुरु। किंभूतः अन्तर्मनसि संत्यक्ताः सर्वाशास्तृष्णा येन सः यतो वीतरागो विषयाभिलापरहितः। अतएव विवासनः सर्ववासनाशून्यः। तथा बहिरेव सर्वे समाचारा आरंभा यस्य स तथा ॥ २ ॥

पुनः व्यवहार कसा करावा याविषयीं सांगतात. रामा, मनामधील सर्व आशा टाकून व विषयवासना सोडून वासनाशून्य असें असावें आणि बाहेर सर्व उद्योग करावेत. याप्रमाणें लोकांत वागलें असतां तो बद्ध होत नाहीं. ॥ २ ॥

पूर्णां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ॥
जीवन्मुक्तस्तथा स्वस्थो लोके विहर राघव ॥ ३॥

पूर्णामिति । ध्येयो यः संसारः तस्य त्यागेन विलसति शोभते सा तामेवंविधां पूर्णां दृष्टिमवष्टभ्यावलंब्य जीवन्मुक्तः स्वभावेन स्वस्थः सन् हे राघव लोके तिष्ठ लोकवत् व्यापारं कुरु ॥ ३ ॥

ध्येय ह्मणजे संसार, त्या संसाराच्या त्यागानें शोभणाऱ्या अशा पूर्ण दृष्टीचें अवलंबन करून तूं स्वस्थ असा लोकामध्यें व्यापार कर; तसें केलें असतां तूं जीवन्मुक्त आहेस. ॥ ३ ॥

एको विशुद्धबोधोहमिति निश्चयवन्हिना ॥
प्रज्वाल्य द्वैतगहनमेक एव सुखी भव ॥ ४ ॥

एक इति । अहमेको नान्यः । सजातीयविजातीयस्वगत भेदरहितः । अतएव विशुद्धबोधः । सत्यज्ञान इत्येवंविधेन निश्चयवन्हिना सिद्धांतरूपपावकेन द्वैतगहनं भेदकाननं द्वैतमन्योन्यमेप इति कृत्स्नादिभेदज्ञानं तदेव गहनं प्रज्वाल्य दग्ध्वा एकः सन् सुखीभव । सुखरूपं स्याः ॥ ४ ॥

मी एक ह्म० सजातीय विजातीय स्वगत भेद इत्यादिकांनीं रहित आहें ह्मणूनच विशुद्ध बोध झालेला असा आहें, व सत्यज्ञान इत्यादि रूपवान् आहें अशा निश्चयरूप अग्नीनें हा मी व हा अन्य अशा द्वैतरूपी वनाचें दहन करून सुखी हो. ॥ ४ ॥

देहोऽहं मानपाशेन दृढं बद्धोऽसि सर्वतः ॥
बोधोऽहं ज्ञानखड्गेन तं निकृत्य सुखी भव ॥५॥

देह इति । अहं देहः इति यो मानो देहाभिमानः स एव पाशः बंधकत्वात्त्वात् । तेन त्वं सर्वतो बद्धोसि । तर्हि कि-

कार्यमतआह । बोधो ज्ञानरूप इति ज्ञानं स एव खड्गः तेन देहाभिमानपाशं निकृत्य विच्छिद्य सुखीभवेत्यर्थः ॥ ५ ॥

मीच देह आहें असा जो अभिमान होणें, तोच पाश आहे व त्यानें सर्व प्रकारें तूं बद्ध आहेस. आतां जर त्यापासून मुक्त व्हावें अशी इच्छा असेल तर बोध ह्मणजे ज्ञान तोच मी आहें असें जें ज्ञान त्या ज्ञानरूपी खड्गानें तो पाश तोडून तूं सुखी हो. ॥ ५ ॥

अनात्मनि रतिं त्यक्त्वा निर्विभागो जगत्स्थितौ ॥
एकनिष्ठतयान्तस्थः सच्चिन्मात्रपरो भव ॥ ६ ॥

अनात्मनीति । हे राघव ईदृशो भव । किंभूतः निर्विभागः जगत्स्थितौ जगत्स्थित्यां विभजनरहितः जगद्रूपभेदकल्पनाहीनः । एकनिष्ठतया एकस्मिन्नात्मन्येवानिश्चलतयाऽन्तस्थः बहिरिन्द्रियव्यापारहीनः अतएव सच्चिन्मात्रपरः सन् नित्यं चिज्ज्ञानरूपं यद्ब्रह्मतत्परः तदेकभूतं किंकुर्वेदृशो भवामीति चेच्छृणु । अनात्मनि देहादौ रतिं त्यक्त्वा देहाद्यनासक्तिं विनाज्ञानानुदयादिति भावः ॥ ६ ॥

वसिष्ठ ह्मणतात, हे रामा, तूं असा हो. ह्मणजे बंध पावणार नाहींस कसा ह्मणशील तर, अनात्म्याच्या ठिकाणीं जी रति आहे तिचा परित्याग करून जगत्स्थितीविषयीं निर्विभाग ह्मणजे भेदकल्पनारहित असा हो. आणि आत्म्याच्या ठिकाणीं एकनिष्ठ असून अंतस्थ, ह्मणजे बाह्य व्यापार शून्य असा सत् चित् स्वरूप जें ब्रह्म तत्स्वरूप हो. तात्पर्य, देहाच्या ठिकाणीं प्रीति न करितां ज्ञान संपादन करून ब्रह्मस्वरूप व्हावें. ॥ ६ ॥

अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् ॥
सचेतनं विशुद्धं च तन्मयो भव सर्वदा ॥ ७ ॥

अजाग्रदिति । अजाग्रत्स्वप्ननिद्रस्य निद्रा सुषुप्तिः जाग्र-

स्वप्नसुषुप्त्यवस्थारहितस्य तुरीयस्य ते तव विशुद्धस्य यद्रूपं तन्मयः सर्वदा भव । कथंभूतं रूपं सनातनं नित्यं सचेतनं ज्ञानरूपं विशुद्धं निरंजनं । ब्रह्मरूपो भवेत्यर्थः ॥ ७ ॥

जागृती, स्वप्न व निद्रा यांहून निराळें, तुरीय, सचेतन ह्मणजे ज्ञानस्वरूप, सनातन ह्मणजे नित्य, व विशुद्ध ह्मणजे निरंजन जें तुझें स्वरूप तन्मय सर्वदा असावें. ह्मणजे ब्रह्मस्वरूप व्हावें. ॥ ७ ॥

माभव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ॥
भावनामखिलां त्यक्त्वा यन्मयस्तन्मयो भव॥ ८॥

मा भवेति । ग्राह्यभावात्मा ग्राह्यस्वरूपो मा भव । ग्राहकात्मा गृहीतृस्वरूपोऽपि मा भव । किंतर्हि अखिलां समग्रां भावनां ग्राह्यग्राहकत्वादिरूपां त्यक्त्वा यन्मयोऽसि तन्मयो ब्रह्मीभूतो भव ॥ ८ ॥

हे, रामा तूं ग्राह्य, गृहीतृ, स्वरूप न होतां सर्व भावनांचा त्याग करून जें स्वरूप आहे तन्मय व्हावें. ह्मणजे ब्रह्मस्वरूप व्हावें. ॥ ८ ॥

संकल्पेनैव संकल्पं मनसैव मनो मुने ॥
छित्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम्॥ ९॥

संकल्पे नेति । हे मुने मननशील राघव संकल्पं जिघृक्षादिरूपं नैव संकल्पेन्न कुर्यात् । तर्हि किंविधेयं । मनसैव निर्वासनेन मनः संकल्पात्मकं छित्वा निःसंकल्पं विधायात्मनि स्वस्वरूपे तिष्ठ । एतावति संकल्पवर्जनमात्रे किं दुष्करं अनायाससाध्यमित्यर्थः ॥ ९ ॥

हे मुने रामा, तूं जिघृक्षादिरूप[1] जो संकल्प तो करूं नको, तर वासनारहित अशा मनानें संकल्पात्मक मनाला वासनारहित

[1] ग्रहण करण्याची इच्छा.

करून आत्मस्वरूपीं रहा. मग संकल्प नष्ट झाला असतां काय दुष्कर आहे? तर अनायासानें सर्व साध्य आहे असें समज. ॥ ९ ॥

कस्तवायं जडो मूको देहो भवति राघव ॥
यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥१०॥

क इति । हे राघव जडोऽचेतनो मूको निरिंद्रियो देहस्तव कः न तव देहेन कश्चित्संबंध इत्यर्थः । यदर्थं यस्य देहस्यार्थे अवशः परवशः सन् त्वं सुखदुःखाभ्यां परिभूयसे सुखदुःखवशो भवसीत्यर्थः ॥ १० ॥

हे रामा, ज्या देहाकरितां परवश होत्साता सुखदुखानें पराभव पावतो असा जड, मूक हा देह तुझा कोण आहे? तर या देहाशीं तुझा कांहीं संबंध नाहीं. ॥ १० ॥

क मांसरुधिरादीनि क त्वं चैतन्यविग्रहः ॥
विजानन्नपि देहेऽस्मिन्नात्मधर्मी न जहासि किं॥११॥

केति । मांसरुधिरादीनि देहस्थानि क । चैतन्यरूपविग्रहः ज्ञानरूपस्त्वं क । एवं जानन्नपि अस्मिन्देहे आत्मबुद्धिं किं न जहासि न त्यजसि ॥ ११ ॥

देहाचे ठिकाणीं असणारीं मांस, रक्त, अस्थि हीं कोणीकडे आणि चैतन्यरूपविग्रह ह्मणजे ज्ञानस्वरूप असा तूं कोणी कडे. तव्हां असें जाणत असून देहाचे ठिकाणची आत्मबुद्धि कां सोडीत नाहींस? ॥ ११ ॥

एतावतैव देवेशः परमात्माऽवगम्यते ॥
काष्ठलोष्ठसमत्वेन देहोयमवगम्यते ॥१२॥

एतावतैवेति । एतावतैव एतावन्मात्रेण परमात्मा अवगम्यते । अयं देहो यस्तु काष्ठलोष्ठसमत्वेन काष्ठतृणतुल्यत्वेनावगम्यते तस्य यत् तृणकाष्ठतुल्यत्वज्ञानं तदेव परमज्ञानमित्यर्थः १२

यावरील प्रकारानेंच परमात्मा जाणावा व काष्ठ, लोष्ठ ( ढेंकूळ) तुल्य असा देह आहे असें समजावें. ह्मणजे देह काष्ठलोष्ठतुल्य आहे असें जें ज्ञान तेंच परमज्ञान असें समजावें. ॥ १२ ॥

अहोनु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् ॥
यदसत्यमविद्याख्यं तत्पुरः परिवल्गति ॥१३॥

अहो इति । अहो इत्याश्चर्ये । नु इति विचारे । इदं चित्रं अद्भुतं किं । यत्सत्यं ब्रह्म तत नृणां विस्मृतं ॥ यदविद्यासंज्ञकमसत्यं तत्पुरोऽग्रे परिवल्गति विस्फुरति स्वं ब्रम्हस्वरूपं विस्मृत्य देहात्मतयाऽजना इति चित्रमित्यर्थः ॥ १३ ॥

हें मोठें आश्चर्य आहे कीं, जें ब्रह्म सत्य असतां त्याचें मनुष्यांना विस्मरण आहे आणि जें अविद्यानामक खोटें आहे त्याचें स्फुरण होतें. ह्मणजे ब्रह्मस्वरूपाला विसरून देहात्मबुद्धिरूप अज्ञानानें हे सर्व जन युक्त आहेत हेंच मोठें आश्चर्य! ॥१३॥

अन्यच्चित्रं यत्परमं ब्रह्म तद्विस्मृतं नृणाम् ॥
यन्ममेदमविद्याख्यं तत्पुरः प्रबलायते ॥ १४ ॥

अन्यदिति । अन्यदपि चित्रं । यत्परमं ब्रम्ह तन्नृणां विस्मृतं यन्ममेदमित्यहंकारममकारास्पदं तत्पुरोऽग्रे प्रबलं बलवत् भवति ॥ १४ ॥

तसेंच दुसरेंही एक आश्चर्य आहे तें असें कि, जें ब्रह्मस्वरूप त्याची विस्मृति होऊन, अहंकाररूप जें अविद्यास्वरूप तेंच अग्रभागीं स्फुरण होतें. १४ ॥

सर्वं ब्रह्मेति यस्यान्तर्भावना सा विमुक्तिदा ॥
भेदबुद्धिरविद्येयं सर्वथा तां परित्यज ॥ १५ ॥
इति लघुयोगवासिष्ठसारे सप्तमं प्रकरणम् ॥

सर्वमिति । यस्यान्तश्चित्ते सर्वं ब्रह्मेति भावना वासना सा विमुक्तिदा मोक्षदात्री । या भेदबुद्धिः सा अविद्या तां भेदबुद्धिं परित्यज ॥ २९ ॥ इति लघुयोगवासिष्ठसारविवरणे सप्तमं प्रकरणं समाप्तम् ॥

सर्व ब्रह्मस्वरूप आहे अशी जी अंतर्यामीं भावना होते तीच मुक्ति देणारी आहे. ह्मणून भेदबुद्धि जी अविद्या तिचा सर्वथा परित्याग कर ह्मणजे ब्रह्मस्वरूपयुक्त असा मुक्त होशील. ॥ १९ ॥ याप्रकारें सप्तम प्रकरण समाप्त झालें.

# अथात्मार्चनं नामाष्टमप्रकरणम्

वसिष्ठ उवाच॥यदि देहं पृथक्कृत्य चिति विश्रम्य तिष्ठसि ॥ तदा तृणीकृताशेषः स्वयमेको भविष्यसि ॥१॥

आत्मनिरूपणमाह यदीति । देहं शरीरं पृथक् कृत्य दूरे कृत्वा चिति चैतन्ये विश्रम्य यदि त्वं तिष्ठसि । यद्वा हे राम यदि त्वं देहं पृथक् कृत्य देहादिभ्यो विविच्य चिति विश्रम्य चिदेकाग्रो भूत्वा तिष्ठसि । तदा तृणीकृताशेषः तृणी कृतमशेषविश्वं येनेदृशः सन् स्वयमेको ब्रह्म भविष्यति । तत्र दृष्टांतमाह । अष्टावक्र । यदि देहं पृथक्कृत्य चिति विश्रम्य तिष्ठसि ॥ अधुनैव सुखी शान्तो बन्धमुक्तो भविष्यसि ॥ एवमेवे सर्थः ॥ १ ॥

आतां आत्मनिरूपण सांगतात.

वसिष्ठ ह्मणतात, हे रामा, जर तूं हें शरीर आत्म्याहून निराळें आहे असें मानून चैतन्याचे ठिकाणीं विश्रामाला पावशील तर सर्व जगताला तृणाप्रमाणें मानून एक जें ब्रह्म तत्स्वरूप होशील. आणि आजच बन्धमुक्त सुखी व शान्त असा होशील. ॥ १ ॥

येनेदं वेत्सि तज्ज्ञात्वा कुरु प्रत्यङ्मुखं मनः॥
तत्र प्रकाशरूपत्वं द्रक्ष्यसि स्फुटमात्मनः ॥२॥

येनेदमिति । येनात्मना इदं जगद्वेत्सि जानासि तत् ज्ञात्वा मनः प्रत्यङ्मुखमात्माभिमुखं कुरु । तत आत्माभिमुखमनसा आत्मनः प्रकाशरूपत्वं स्फुटं द्रक्ष्यसि ॥ २ ॥

ज्या आत्म्यानें हें संपूर्ण जगत् जाणतोस त्या आत्म्याला जाणून मनाला आत्माभिमुख कर ह्मणजे त्या आत्माभिमुखमनानें आत्म्याचें जें प्रकाशरूप तें स्पष्ट जाणशील. ॥ २ ॥

येन शब्दं रसं रूपं गंधं जानासि राघव ॥
तमात्मानं परं ब्रह्म जानीहि परमेश्वरम् ॥ ३ ॥

येनेति । हे राघव येनात्मना शब्दस्पर्शरूपरसगंधान्त्वं जानासि तमात्मानं जीवं परमेश्वरं नियंतारं परंब्रह्म जानीहि ॥ ३ ॥

हे रामा, ज्या आत्म्यानें शब्द, स्पर्श, रूप, रस, गंध यां सर्वांस जाणतोस असा जो आत्मा तोच परब्रह्म ह्म० परमेश्वर आहे असें समज. ॥ ३ ॥

यत्र भावाहि स्पन्दन्ते निर्मीयन्ते च येन च ॥
तमेवात्मानमात्मानं रूपं जानीहि राघव ॥४॥

यत्रेति। यत्रात्मनि भावाः पृथिव्यादयः पदार्थाः स्पन्दन्ते चेष्टन्ते । येनात्मना निर्मीयन्त उत्पाद्यन्ते तमेवात्मानं स्वरूपं परमेश्वरं नियंतारं परंब्रह्म जानीहि ॥ ४ ॥

ज्या आत्म्याचे ठिकाणीं पृथिवी आदिकरून सर्व भाव व्यापार करितात व ज्यानें ते भाव निर्माण केले जातात, असा जो आत्मा तोच ब्रह्म व परमेश्वरस्वरूपी आहे असें समज. ॥ ४ ॥

यत्तज्ज्ञेयमिदं तत्त्वं नेति संत्यज्य युक्तिभिः ॥
प्राप्यावशिष्टं चिन्मात्रं सोऽहमस्मीति भावय॥५॥

यदिति । यदिदं तत्त्वमिति ज्ञेयं जगत्संबंधि तद्युक्तिभिर्न्यायैर्नेति संत्यज्य त्यागे क्रियमाणे यदवशिष्टं सर्वावधिभूतं चिन्मात्रं निरवधेर्निषेधस्यासंभवात् तच्चिद्रूपं प्राप्य सोऽहमस्मीति पुनः पुनर्भावय ॥ ५ ॥

हें जें सर्व दृष्ट आहे तें सर्व तत्स्वरूप आहे. व जें युक्तींनी त्याग करून शेष राहिलें, तसेंच चित्स्वरूप असून ज्यामध्यें निषेधाचा अभाव आहे असें जें ब्रह्मस्वरूप तें मी आहें अशी भावना धारण कर. ॥ ५ ॥

ज्ञानं न भवतो भिन्नं ज्ञेयं ज्ञानात्पृथक् नहि ॥
अतो नात्मेतरत्किंचित्तस्माद्भेदो न विद्यते ॥६॥

ज्ञानमिति । ज्ञानं भवतः सकाशाद्भिन्नं न अतो ज्ञेयं च ज्ञानात्पृथक् नहि । अपूर्त इव इतरत् ब्रह्मभिन्नं किंचिन्नास्ति ॥ तस्माद्भेदो द्वैतं न विद्यते ॥ ६ ॥

ज्ञान तुझ्याहून निराळें नाहीं व ज्ञेय[1] जें ब्रह्म तें ज्ञानाहून भिन्न नाहीं. ह्मणून आत्म्याहून इतर कांहीं नाहीं. तेव्हां अर्थातच भेद राहिला नाहीं. ॥ ६ ॥

ब्रह्मविष्णुशिवेन्द्राद्या यद्यत्कुर्वन्ति सर्वतः ॥
तदहं चिद्वपुः सर्वं करोमीत्येव भावय ॥७॥

ब्रह्मेति । ब्रह्मविष्णुशिवेन्द्राद्या देवाः सर्वतः सर्वदा यत्सृष्टिस्थितिसंहारसर्गपालनादि यत्कुर्वन्ति चिद्वपुः चैतन्यरूपोऽहमेव तत्सर्वं करोमीति भावय ॥ ७ ॥

---

१ जाणण्यास योग्य तें.

ब्रह्मा, विष्णु, शिव, इंद्र इत्यादि देव जें जें सर्व करितात ह्मणने अनुक्रमें उत्पत्ति, पालन, संहार व पर्जन्य वर्षाव हीं सर्व चित्स्वरूप असा मीच करितों अशी भावना कर. ह्मणजे हे सर्व देव व आपण हे सर्व ब्रह्मस्वरूप आहेत असें मान. ॥ ७ ॥

अहं सर्वमिदं विश्वं परमात्माहमव्ययः ॥
न भूतं नास्ति नो भावि मत्तोन्यदिति भावय ॥ ८ ॥

अहमिति । इदं सर्वं विश्वमहमेवाव्ययोऽविनाशी । परमात्माप्यहमेकमतोऽन्यद्भूतं नास्ति न वर्तते । न भावि न भविष्यतीति चिन्तय ॥ ८ ॥

सर्व विश्व मीच आहें, व अव्यय जो परमात्मा तोही मीच आहें. तसेंच माझ्यावांचून या मागें कांहीं झालें नाहीं व पुढें होणारें नाहीं असें चिंतन कर. ॥ ८ ॥

एकं ब्रह्म चिदाकारं सर्वात्मकमखण्डितम् ॥
निष्कम्पं भूरि वाशेषमिति भावय यत्नतः ॥ ९ ॥

एकमिति । एकमेवाद्वितीयं चिदाकारं चैतन्यरूपं सर्वात्मकं सर्वस्वरूपमखंडितमव्ययं । निष्कम्पं । कंपरहितं । भूरि बहुधाथवाशेषमुर्वरितमशेषं सर्वं ब्रह्मैवास्तीति यत्नतश्चिन्तय ॥ ९

एक, चित्स्वरूप, सर्वात्मक, अखंडित, निष्कंप, अनंत व ज्याहून अन्य कांहीं नाहीं असें जें ब्रह्म, त्याची यत्नानें तेंच मी आहें अशी भावना कर, ह्मणजे चिंतन कर. ॥ ९ ॥

नाहं न चान्यदस्तीति ब्रह्मैवास्ति निरन्तरम् ॥
आनन्दपूर्णं सर्वत्रेत्यनुद्वेगादुपास्यताम् ॥ १० ॥

नाहमिति । अहं नास्ति अन्यदपि नास्ति आनंदपूर्णं निरंतरं ब्रह्मैवास्तीति उद्वेगं विहाय उपास्यतां सेव्यतां ॥ १० ॥

मी नाहीं व दुसरेंही कांहीं नाहीं तर, आनंदमय, पूर्ण व निरंतर असणारें असें ब्रह्मच आहे. त्या ब्रह्माची उद्वेग सोडून सेवा करावी ह्मणजे तत्स्वरूपता प्राप्त होते. ॥ १० ॥

ग्राह्यग्राहकसंबन्धे सामान्ये सर्वदेहिनाम् ॥
योगिनः सावधानत्वं यत्तदर्चनमात्मनः ॥११॥
इति लघुयोगवासिष्ठसारे अष्टमप्रकरणम् ॥८॥

ग्राह्येति । सर्वदेहिनां ग्राह्यग्राहकसंबन्धे सामान्ये साधारणे सति योगिनो यत्सावधानत्वं तदेवात्मार्चनं पूजनं । नहि पुष्पादिभिः पूजनं भवतीत्यर्थः ॥ ११ ॥ इति लघुयोगवासिष्ठसारे विवरणे आत्मार्चनं नाम अष्टमं प्रकरणम् ॥

सर्व प्राण्यांचा ग्राह्यग्राहकसंबंध असतां योगी जो सावधपणा ठेवतात तीच आत्म्याची पूजा असें समजावें. कारण, ते योगी कोणत्याही कालीं आत्मध्यानाला सोडीत नाहींत ह्मणून तेंच आत्मपूजन समजावें. पुष्पादिक उपचारांनीं जें पूजन करितात तें उपयोगी नाहीं. ॥ ११ ॥ याप्रकारें हें अष्टम प्रकरण झालें.

# अथात्मनिरूपणं नाम नवमं प्रकरणम्.

वसिष्ठ उवाच ॥ तस्मिन्देहेन्द्रियादीनां संघाते
स्फुरति स्वतः ॥ अयं सोऽहमिति भावः स
जीवो मलगुण्ठितः ॥१॥

इदानीमात्मानं निरूपयति । वसिष्ठ उवाच । तस्मिन्निति । तस्मिन्प्रसिद्धे देहेन्द्रियादीनां संघाते अयं सोहमिति भावेन स्वतो यः स्फुरति स कृत्रिममलेन गुंठितश्चेष्टितो जीवो ज्ञेयः ॥ १ ॥

आतां आत्मस्वरूप सांगण्याकरितां प्रथम जीवस्वरूप वर्णन करितात. वसिष्ठ ह्मणतात, हे रामा, प्रसिद्ध जो इंद्रियसमुदाय त्याचे ठिकाणीं तोच मी आहें असा जो अभिमान स्फुरण पावतो व कृत्रिममलानें युक्त असतो तो जीव समजावा. ॥ १ ॥

सर्वमेव चिदाकाशं ब्रह्मेति घननिश्चये ॥
स्थितिं याते शमं याति जीवो निःस्नेहदीपवत् ॥२॥

सर्वमिति। सर्वमिदं चिद्रूपमाकाशवन्निर्मलं ब्रह्मेति घने निबिडे निश्चये स्थितिं याते सति जीवो निःस्नेहदीपवत् तैलं विना दीप इव शमं याति। अयमर्थः। यथा निस्तैलो दीपो दीपत्वं विहाय महातेजोरूपो भवति कारणे लीयते तद्वदित्यर्थः ॥ २ ॥

तो जीव, हें सर्व चित्स्वरूप, आकाशाप्रमाणें निर्मळ असें ब्रह्म आहे असा दृढ निश्चय झाला असतां, तत्स्वरूप ह्मणजे ब्रह्मस्वरूप होतो. तैलरहित दीप जसा दीपत्वस्वरूप टाकून महा तेजस्वरूप जें कारण त्यामध्यें लीन होतो त्याप्रमाणें तो ब्रह्मांत लीन होतो. ॥ २ ॥

स्वमहत्वं यथोपेक्ष्य कश्चिद्विप्रो दुरीहया ॥
अङ्गीकरोति शूद्रत्वं तथा जीवत्वमीश्वरः ॥३॥

स्वेति। यथा कश्चिद्विप्रोऽपि स्वकीयं महत्वमुपेक्ष्य दुरीहया दुष्टचेष्टया नीचसेवादिना शूद्रत्वमङ्गीकरोति। तथेश्वर आत्माऽज्ञानेनजीवत्वमङ्गीकरोति ॥ ३ ॥

जसा श्रेष्ठ ब्राह्मण आपल्या महत्वाची उपेक्षा करून दुष्ट व नीच सेवेनें शूद्रत्वाचा अंगीकार करतो. त्याप्रमाणें ईश्वर ह्मणजे आत्मा अज्ञानानें जीवपणाचा अंगीकार करितो. वास्तविक पाहिलें तर तो ज्ञानस्वरूप आहे. ॥ ३ ॥

असत्यमेव संकल्प्य भ्रमेणेदं शरीरकम् ॥
जीवः पश्यति मूढात्मा बालो यक्षमिवोत्थितम् ॥ ४ ॥

असत्यमिति । जीव इदमसत्यमेव शरीरं संकल्प्य मूढात्मा सत्पश्यति मन्यते । यथा बालो मिथ्याभूतमुत्थितं यक्षं पश्यति ॥ ४ ॥

जसा अज्ञानी बालक खोट्या मशाला ( बागुलबुवा ) खरें मानतो त्याप्रमाणें तो जीव असत्य संकल्पानें भ्रमी होऊन मूढ असा हें शरीर सत्य नसतांही सत्य मानतो. ॥ ४ ॥

मृत्सेभके यथेभत्वं शिशुरध्यस्य वल्गति ॥
अध्यस्यात्मनि देहादीन्मूढस्तद्वद्विचेष्टते ॥ ५ ॥

मृत्सेति । यथा शिशुर्बालो मृत्सेभके मृत्तिकागजे इभत्वं गजत्वं अध्यस्य आरोप्य वल्गति । तथा मूढ आत्मनि देहादीनध्यस्य विचेष्टते ॥ ५ ॥

जसा बालक मातीच्या हत्तीचे ठिकाणीं हा खरा हत्ती आहे, असें मानून क्रीडा करितो त्याप्रमाणें मूढ आत्म्याच्या ठिकाणीं देहादिकांचा आरोप करून त्याच्या निश्चयानें क्रीडा करितो. वस्तुतः ते देहादिक सर्व असत्य आहेत. ॥ ५ ॥

चित्रसर्पः परिज्ञातो न सर्पभयदो यथा ॥
जीवसर्पः परिज्ञातस्तथा दुःखे न दुःखदः ॥ ६ ॥

चित्रेति । यथा चित्रे लिखितः सर्पः परिज्ञातः सन् सर्पभयदो न भवति । तथा जीवरूपः सर्पो ब्रह्मत्वेन ज्ञातो दुःखे दुःखदायी न भवति ॥ ६ ॥

जसें चित्रांतील सर्पाचें यथार्थ ज्ञान झाल्यानंतर तो भय देणारा होत नाहीं त्याप्रमाणें जीवरूपी सर्पाचें ब्रह्मस्वरूपानें ज्ञान झालें असतां तो या संसाराचे ठिकाणीं भय देणारा होत नाहीं. ॥ ६ ॥

स्रजि सर्पोऽयमध्यस्तो मालायामेव लीयते ॥
आत्मनि प्रोत्थितो भेद आत्मन्येव विलीयते ॥ ७ ॥

स्रजीति । यथा स्रजि मालायां भ्रमादुत्थितः सर्पः मालाज्ञानान्मालायामेव लीयते तथा आत्मनि भ्रमोत्थितो भेद आत्मनः स्वरूपज्ञानादात्मन्येव विलीयते ॥ ७ ॥

जसा माळेचे ठिकाणीं भ्रमानें उत्पन्न झालेला सर्प माळेचें खरें ज्ञान आलें असतां त्या माळेमध्येंच लीन होतो. त्याप्रमाणें आत्म्याचे ठिकाणीं भ्रमानें उत्पन्न झालेला भेद आत्म्याच्या यथार्थ ज्ञानानें त्यामध्येंच लीन होतो. ॥ ७ ॥

नैकमप्यङ्गदाद्यं च यथैकं हेमसंस्थितम् ॥
उपाधिभिरनेकोऽपि तथात्मैकः स्वरूपतः ॥ ८ ॥

नैकमिति। यथानेकमप्यङ्गदं आदिशब्देन कुंडलकंकणादिसंस्थितं सदेकं हेमैव । तथा उपाधिभिरनेकोप्यात्मा स्वरूपतो ब्रह्मरूपेणैकैव ॥ ८ ॥

सुवर्णाचे अलंकार अनेक असले तरी जसें सुवर्ण एकच आहे त्याप्रमाणें उपाधीनें आत्मा अनेक आहे असा भासला तथापि तो ब्रह्मस्वरूपानें एकच आहे. ॥ ८ ॥

शरीरेऽवयवा यद्वद्विकाराश्च यथा मृदः ॥
अद्वैतं द्वैतवद्भाति तथा स्थावरजङ्गमम् ॥ ९ ॥

शरीर इति । यथा शरीरेऽवयवा हस्तपादादयो नाना भवंति । यथा मृदो विकारा घटशरावादयो नाना भांति तथाऽद्वैतं ब्रह्मैव स्थावरं जङ्गमरूपं द्वैतवद्भाति ॥ ९ ॥

जसे शरीराचे अवयव निराळे भासतात, व मृत्तिकेचे घट, शराव, असे अनेक विकार भासतात. परंतु वास्तविक पाहिलें असतां मृत्ति-

का व शरीर हीं व त्यांचे अवयव व विकार हे एकत्र आहेत त्या-प्रमाणें स्थावर व जंगमरूप अद्वैत जें ब्रह्म तें द्वैतरूपी भासतें. ॥९॥

मणितोयघृतादर्शेष्वेकमप्याननं यथा ॥
भात्यनेकमिवात्माऽपि तथा धीष्वनुबिम्बितः॥ १०॥

मणीति । यथैकमेवाननं मुखं मणौ तोये घृते त्वादर्शे च पृथक् प्रतिबिंबितमप्येकमेव सदनेकमेव भाति तथा एकवात्मा धीषु बुद्धिष्वाबिंबितोऽनेक इव भाति ॥ १० ॥

जसें मुख एक असतां मणी, उदक, घृत, व आरसा यांत निरनिराळें प्रतिबिंबित झालें ह्मणजे अनेकाचें भान होतें त्याप्रमाणें आत्मा एक असतां अनेक बुद्धिचे ठिकाणीं प्रतिबिंबित असल्यामुळें अनेक आत्मे आहेत असा भास होतो. ॥ १० ॥

धूलिधूमाम्बुदैर्यद्वन्मलिनीक्रियते नभः ॥
परामृष्टस्तथैवात्मा विशुद्धः प्राकृतैर्गुणैः ॥११॥

धूलीति । यथा निर्मलमपि नभो धूमसंबंधमलिनीक्रियते । तथा विशुद्ध आत्मा प्रकृतिसंबन्धिगुणैः परामृष्टो मलिनीक्रियते ॥ ११ ॥

जसें आकाश स्वच्छ असतां धूली, धूम व मेघ यांच्या योगानें मलीन होतें तसें आत्मस्वरूप शुद्ध असतां प्रकृतिगुणानें युक्त झाल्यामुळें मलीन आहे असा भास होतो. ॥ ११ ॥

अग्निसङ्गाद्यथा लोहमग्नित्वमुपगच्छति ॥
आत्मसङ्गात्तथा गच्छत्यात्मतामिन्द्रियादिकं॥१२॥

अग्नीति । यथा लोहमग्निसङ्गादग्नित्वं गच्छति तथेन्द्रिया-दिकमात्मसङ्गादात्मत्वं गच्छति ॥ १२ ॥

लोह जसें अग्नीच्या संगानें अग्नित्व पावतें, तसें आत्मसंगतीनें इंद्रियादि हीं सर्व आत्मस्वरूप पावतात. ॥ १२ ॥

अदृश्यो दृश्यते राहुर्गृहीतेन यथेंदुना ॥
तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते ॥१३॥

अदृश्य इति । यथाऽदृश्यो राहुरिन्दुना गृहीतेन दृश्यते तथा अनुभवमात्रात्मा अरूप आत्मा दृश्येन शरीरादिना कृत्वाऽवलोक्यते ॥ १३ ॥

जसा राहु अदृष्ट असतां चंद्रग्रहणकालीं दृष्ट होतो तसा आत्मा अस्वरूप आहे तरी अनुभवानें व शरीरादिकांनीं तो पाहतां येतो. ॥ १३ ॥

आत्मनोजडसङ्गात्स्यादनात्मत्वं जडस्य तु ॥
स्यादात्मसङ्गादात्मत्वं जलाग्न्योः सङ्गवन्मिथः ॥१४॥

अनात्मन इति । आत्मनो जडशरीरादेः सङ्गादनात्मत्वं । जडस्यात्मसङ्गादात्मत्वं एवं परस्पराध्यासः । तत्र दृष्टांतः जलाग्न्योः संगात् यथाऽग्नेजलत्वं जलस्याग्नित्वमिति ॥ १४ ॥

आत्म्याला जड जें शरीरादि त्यांच्या संगतीनें अनात्मत्व येतें व जडाला आत्म्याच्या संगतीनें आत्मत्व येतें. याचा दृष्टांत, जल व अग्नि यांच्या संसर्गानें परस्परांस तत्तत्स्वरूपप्राप्ति होते त्याप्रमाणें. ॥ १४ ॥

असत्यजडचित्तांशनयनाच्चिद्वपुर्जनुः ॥
महाजलगतोत्थाग्निरिव रूपं स्वमुज्झति ॥१५॥

असत्येति । असत्यस्य जडरूपस्यांशस्य नयनाज्जडरूपान्तःकरणस्य चिद्रूपत्वभावनाच्चिद्वपुश्चिद्रूप आत्मा जनुर्जन्म उज्झति त्यजति मुक्तो भवतीत्यर्थः । तत्र दृष्टान्तः अग्निर्महाजलगतो यथारूपमग्नित्वमुज्झति ॥ १५ ॥

असत्य व जडरूपान्तःकरणाची चित्स्वरूपाचे ठिकाणीं भावना केली असतां, ह्मणजे तशा प्रकारचें अन्तःकरण चित्स्वरूप आहे अशा भावनेनें, चित्स्वरूप जो आत्मा तो जन्मापासून मुक्त होतो. जसा अग्नि सोन्या उदकांत टाकिला असतां आपलें रूप ह्मणजे अग्निस्वरूप टाकितो त्याप्रमाणें. ॥ १५ ॥

इक्षौ गुडास्तिले तैलं काष्ठे वह्निर्दृषत्ययः ॥
येनावाप्यं वपुष्यात्मा लभ्यते चैव यत्नतः ॥१६॥

इक्ष्वादीति । यथेक्षौ वर्तमानो गुडो यत्नेन लभ्यते तिले वर्तमानं तैलमपि यत्नेनैव लभ्यते काष्ठे वह्निश्च । दृषदि पाषाणेऽयो लोहं यत्नेन दाहादिना लभ्यते येनावाप्यं च यत्नेन यथा लभ्यते । तथा वपुःषु देहेषु वर्तमान आत्मा यत्नेन श्रवणमनननिदिध्यासनादिना लभ्यते ॥ १६ ॥

उसामध्यें गुळ, तिळांत तेल, काष्ठांत अग्नि, दगडांत लोखंड, गाईचे ठिकाणीं तूप हीं यत्न केला असतां जशीं प्राप्त होतात त्याप्रमाणें देहामध्यें यत्न केला तर ह्मणजे श्रवण, मनन, निदिध्यसन हीं केलीं असतां आत्मप्राप्ति होते. ॥ १६ ॥

स्फटिकात्मनि नीरन्ध्रे स्थितं खं वीक्ष्यते यथा ॥
तथा सर्वपदार्थेषु चिद्रूपः परमेश्वरः ॥ १७ ॥

स्फटिकेति । यथा नीरन्ध्रेऽपि स्फटिकस्वरूपे स्थितं खमाकाशं वीक्ष्यते तथा सर्वपदार्थेषु चिद्रूपः परमेश्वरो दृश्यते १७

छिद्ररहितस्फटिकामध्यें जसें त्यांतील आकाश दिसतें त्याप्रमाणें सर्व पदार्थांचे ठिकाणीं चित्स्वरूप परमेश्वर दृष्टिगोचर होतो. ॥ १७ ॥

बहिरन्तः स्फुरज्ज्योतीरत्नकुम्भप्रदीपवत् ॥
स्वप्रकाशाद्यथैवैकं स्वरूपमात्मनस्तथा ॥ १८ ॥

बहिरिति। ज्योतिः स्वप्रकाशाद्बहिरन्तः स्फुरदपि यथैकमेव। अत्र दृष्टांतः रत्नकुम्भप्रदीपवत् रत्नैर्बहिरन्तश्च कुम्भप्रदीपोऽन्तर्मध्य एव। तथा आत्मनः स्वरूपं बाहरन्तः मनसि विषयेष्वपि भासमानमेकमेव ॥ १८ ॥

कोणतेंही तेज जसें आंत किंवा बाहेर सारखें असतें त्याप्रमाणें आत्मस्वरूप अंतः ह्मणजे मनांत व बहिः ह्मणजे विषयाचे ठिकाणीं सारखें आहे. जसा रत्नाचा कुंभ करून त्यामध्यें दीप ठेविला असतां तो आंत व बाहेर सारखा प्रकाशक असतो त्याप्रमाणें. ॥ १८ ॥

दर्पणे बिंबितो ह्यर्कः प्रकाशं कुरुते यथा ॥
तथा प्रकाशयत्यात्मा स्वच्छधीष्वनुबिम्बितः ॥१९॥

दर्पण इति। दर्पणे आदर्शे प्रतिबिम्बितो भानुर्यथा प्रकाशं कुरुते तथा स्वच्छधीषु निर्मलचित्तेष्वनुबिम्बित आत्मा विषयान्प्रकाशयति ॥ १९ ॥

आरशावर प्रतिबिंबित सूर्य जसा प्रकाश करितो त्याप्रमाणें निर्मल बुद्धिच्या ठिकाणीं प्रतिबिंबित आत्मा सर्व विषयाला प्रकाशक आहे. ॥ १९ ॥

यत्र स्थितेयं विश्वश्रीः प्रतिभामात्ररूपिणी ॥
रज्वां भुजङ्गवद्भाति स्वयमात्मा सदोदितः ॥२०॥

यत्रेति। यत्रात्मनि स्थितेयं विश्वश्रीः संसारशोभा प्रतिभामात्ररूपा सती रज्वां भुजङ्गन्यायेन भाति। स आत्मा सदोदितः। प्रकाशकोऽस्ति। यथा रज्ज्वज्ञानं सर्पभ्रमोत्पादकं तथा आत्माऽज्ञानं विश्वस्फूर्तिकरमित्यर्थः ॥ २० ॥

आत्म्याच्या ठिकाणीं ही भासणारी विश्वशोभा दोरीवर जशी सर्पभ्रांति होते त्याप्रमाणें भासते. जसें रज्जूचें अज्ञान सर्पभ्रमाला

कारण आहे तसें आत्मविषयक अज्ञान विश्वस्फूर्तीला कारण आहे. आत्मा तर स्वतः प्रकाशक आहे. ॥ २० ॥

आद्यन्तरहितः सत्यश्चिद्रूपो निर्विकल्पकः ॥
आत्मा निरूपिताकाशो जीवस्याद्यः परात्परः ॥२१॥

आत्मस्वरूपमाह । श्लोकैः षड्भिः । आद्यन्तेति । आद्यन्ताभ्यामुत्पत्तिनाशाभ्यां रहितः चैतन्यरूपः सत्यस्त्रिकालावस्थायी विकल्पाद्भेदाद्रहितो निरूपितमाकाशं येन । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति श्रुतेः जीवस्याद्यस्वरूपभूतः परात्सर्वस्मात्पर ईदृश आत्मा ॥ २१ ॥

आतां सहा श्लोकांनीं आत्मस्वरूप सांगतात. आत्मा, आद्यन्त ह्मणजे उत्पत्ति नाश यांनीं रहित, चैतन्यस्वरूप, सत्य ह्मणजे त्रिकाल असणारा, भेदरहित, ज्यापासून आकाशाची उत्पत्ति झाली व जो जीवाचें आद्यस्वरूप, आणि सर्वांहून पर असा आहे. ॥२१॥

आत्मा विशुद्धचैतन्यस्वरूपः शाश्वतो विभुः ॥
निर्विकारःस्वयंज्योतिः स्वभावोऽर्कप्रकाशवत् ॥२२॥

आत्मेति । विशुद्धचैतन्यं स्वरूपं प्रकाशो यस्य । शाश्वतो नित्यः । विभुर्व्यापकः । विकाररहितः स्वयंप्रकाशः अर्कप्रकाशवत्स्वभावः स्वसत्ता यस्य स ईदृश आत्मा ॥ २२ ॥

तसाच शुद्धप्रकाश, नित्य, व्यापक, निर्विकार, स्वयंप्रकाश व सूर्यप्रकाशाप्रमाणें ज्याची स्वसत्ता ह्मणजे प्रकाश आहे असा आहे. ॥ २२ ॥

आत्मानुभवमात्रात्मा सर्वगः सर्वसंश्रयः ॥
प्रकाशानन्यचैतन्याव्यतिरिक्तोऽनलो भवेत् ॥२३॥

आत्मेति । अनुभवमात्रस्वरूपः सर्वगो व्यापी सर्वेषां सं-

श्रय आधारः । प्रकाशादनन्यः प्रकाशरूपः चैतन्याव्य तिरिक्तश्चैतन्यरूपः । यथाग्निरुष्णरूपः स आत्मा ॥ २३ ॥

तसाच, अनुभवानेंच ज्याचें स्वरूप समजतें, व्यापक, सर्वांना आश्रय, प्रकाशस्वरूप, चैतन्यस्वरूप, जसा अग्नि आहे, त्याप्रमाणें आत्मा आहे. ॥२३ ॥

चित्तवर्जितचिन्मात्रः परमात्माऽवभासकः ॥
सबाह्याभ्यन्तरव्यापी निष्कलो निश्चलाश्रयः॥ २४ ॥

चित्तेति। अन्तःकरणचतुष्टयाद्भिन्नः चिद्रूपः भासकः । प्रकाशकः । बाह्याभ्यन्तरव्यापी। कलातीतः निश्चल आश्रयो यस्य स ईदृशः परमात्मा ॥ २४ ॥

तसेंच अंतःकरणचतुष्टयाहून निराळा, परमात्मा, प्रकाशस्वरूप, आंत व बाहेर सर्वत्र भरलेला, कलेहून निराळा व ज्याचा आश्रय निश्चल आहे असें परमात्म्याचें स्वरूप आहे. ॥ २४ ॥

य आत्मा चिन्मयः स्वच्छः प्रबुद्धोऽपचयच्युतः ॥
हेयग्राह्योज्झितो देशकालजात्याद्यसङ्गतः ॥२५॥

य इति । चिन्मयश्चिद्रूपः स्वच्छः निर्मलः प्रबुद्धो ज्ञानरूपः। अपचयच्युतः क्षयरहितः । हेयग्राह्याभ्यामुज्झितस्त्यक्तः देशकालजात्यादिभिरसङ्गतः असंबद्धो यः स आत्मा ॥२५॥

चित्स्वरूप, निर्मल, ज्ञानस्वरूप, ज्याचा केव्हांही क्षय नाहीं, त्याग व स्वीकार या दोहोंहूनही निराळा, देश काल जाति इत्यादिकांनीं जो युक्त नाहीं, तो आत्मा समजावा. ॥ २५ ॥

ब्रह्माण्डे च यथा वायुः सर्वभूतगतस्तथा ॥
स एव भगवानात्मा तनुमुक्तो व्यवस्थितः ॥२६॥

ब्रह्माण्ड इति । यथा ब्रह्माण्डवायुः सर्वेषु भूतेषु गतः ।

तथा सर्वभूतगतोऽपि तनुमुक्तोऽसङ्गी स्थितः "असंगो ह्ययं पुरुष" इति श्रुतेः स आत्मा ॥ २६ ॥

या ब्रह्माण्डामध्यें जसा वायु सर्व भूतांचे ठायीं आहे त्याप्रमाणें आत्मा सर्वत्र असून कोठेंही लिप्त नाहीं. कारण हा पुरुष ह्म० आत्मा असंगी आहे अशी श्रुति आहे. ॥ २६ ॥

एवं चिद्गगनाभोगे भूषणे व्योम्नि भास्करे ॥
धराविवरकोशस्था सैव चित्कीटकोदरे ॥ २७ ॥

एवमिति । चिदम्बराभोगे आभरणे व्योम्नि रवौ धरायां विवरकोशे पाताले या चित् सैव कीटकोदरे सामान्यकीटकमध्ये । "समो मशके समो नाग" इति श्रुतेः ॥ २७ ॥

याप्रमाणें आकाशामध्यें, आभरणामध्यें, व सूर्याचे ठिकाणीं व पृथ्वींत जी चित् ह्मणजे प्रकाश आहे तोच प्रकाश साधारण कीट ह्मणजे जंतूचे ठिकाणीं आहे. कारण आत्मा मशक व हत्ती यांचे ठिकाणीं सारखा आहे असें आत्मस्वरूप श्रुतीनें वर्णिलें आहे. ॥ २७ ॥

न बन्धोऽस्ति न मोक्षोऽस्ति ब्रह्मैवाऽस्ति निरन्तरम् ॥
नैकमस्ति न च द्वैतं संविस्फारं विजृम्भते ॥ २८ ॥

न बन्ध इति । बन्धमोक्षैकत्वद्वैतानि न सन्ति कल्पितत्वात् । किंतर्हि विस्फारं सच्चिद्रूपं ब्रह्मैवाऽस्ति । तदेव च विजृम्भते । प्रकाशते ॥ २८ ॥

बंध नाहीं व मोक्षही नाहीं कारण ते सर्व काल्पनीक आहेत. तर सत् चित् स्वरूप जें ब्रह्म तें निरंतर आहे व तेंच प्रकाशतें. ॥ २८ ॥

ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरंपरा ॥

ब्रह्माहं ब्रह्म मच्छत्रुर्ब्रह्म मन्मित्रबान्धवाः ॥ २९ ॥

ब्रह्मेति। चिज्ज्ञानं भुवनं लोकः। भूतपरंपरा जंतुश्रेणिः। मम शत्रुर्देवदत्तादिः मम मित्राणि बान्धवाश्च अहं च सर्वं ब्रह्मैवेत्यवधार्यं। एकस्मिन्निर्मले येनपदे परमपावने संश्रिता चित्तविश्रान्तिर्मृत्युस्तन्न जिघांसति ॥ २९ ॥

आतां भावनाप्रकार सांगतात. चित् ह्मणजे ज्ञान भुवनं ह्मणजे लोक, प्राणिपरंपरा, माझे शत्रु आणि मित्र व मी हीं सर्व ब्रह्म आहेत असा निश्चय करावा. ज्यानें निर्मल, व पवित्र अशा ब्रह्मपदीं चित्ताची विश्रान्ति केली त्याला मृत्युही मारीत नाहीं. ॥ २९ ॥

चिच्चेत्यकलनाबन्धस्तन्मुक्तिर्मुक्तिरुच्यते ॥
चिच्चेत्याखिलमात्मेति सर्वसिद्धान्तसंग्रहः ॥ ३० ॥

चिदिति। चिच्चेत्यकल्पना भास्यभासककल्पनैव बन्धः तन्मुक्तिः चिच्चेत्याभाव एव मुक्तिः। यतस्तत्सर्वमात्मैवेति सर्व शास्त्रसिद्धान्तः ॥ ३० ॥

हा भास्य व हा भासक अशा कल्पनेनें ह्मणजे द्वैतबुद्धीनें बंध प्राप्त होतो, व त्या द्वैतबुद्धित्यागानें मोक्ष प्राप्त होतो. ह्मणून सर्व आत्मस्वरूप असून भेद नाहीं अशा बुद्धीनें मुक्त व्हावें. व असाच सर्व शास्त्रांचा सिद्धांतही आहे. ॥ ३० ॥

चिदिहास्तीह चिन्मात्रमिदं चिन्मयमेव च ॥
चित्त्वं चिदहमेवेति लोकाश्चिदिति संग्रहः ॥ ३१ ॥

चिदिति। इह चिदस्ति इदं विश्वं अहं च त्वं लोकाश्च चिदेवेति संग्रहः सिद्धांतः ॥ ३१ ॥

हें सर्व चित् आहे. हें विश्व, मी, तूं व सर्व लोक हे चित्स्वरूप आहेत असाच सिद्धांत आहे. ॥ ३१ ॥

यदस्ति यद्भाति तदात्मरूपं यच्चान्यतो भाति न चान्यदस्ति ॥ स्वभावसंवित्प्रतिभाति केवला ग्राह्यं ग्रहीतेति मृषा विकल्पः ॥ ३२ ॥

इति लघुयोगवासिष्ठसारे नवमं प्रकरणम्

यदस्ति यद्भाति तदात्मस्वरूपमेव । तदतिरिक्तं यद्भाति तन्नास्त्येव केवला स्वभावसंविदेव प्रतिभाति । इदं ग्राह्यमयं ग्रहीतेति विकल्पो मिथ्यैवावधार्यं ॥ ३२ ॥ इति लघुयोगवासिष्ठसारे आत्मनिरूपणं नाम नवमं प्रकरणम्

आतां जे आहे व जें भासतें तें सर्व आत्मस्वरूप आहे. त्याहून निराळें जें भासतें तें खोटें आहे. केवळ स्वभावसंवित् ह्मणजे ज्ञानच भासमान होतें हें ग्राह्य व हा गृहणकर्ता हा जो विकल्प आहे तो मिथ्या आहे. ॥ ३२ ॥ इति नवम प्रकरणम् ॥

# अथ निर्वाणप्रकरणं दशमम्

वासिष्ठ उवाच ॥ दृश्यदर्शनसंबंधान्न भवेत्परमं सुखम् ॥ तदेवैकान्तसंचिन्त्यमनोनाशः परं पदम् ॥ १ ॥

इदानीं जीवन्मुक्तिं निरूपयति । वसिष्ठ उवाच । दृश्यदर्शनसंबन्धादिन्द्रियविषयसंबन्धान्न परमं सुखं जायते । एकांतसंचिंत्यब्रह्माहमिति ज्ञानेन यो मनोनाशस्तदेव परं सुखं पदम् ॥ १ ॥

आतां जीवन्मुक्ति कशी ती सांगतात. वसिष्ठ ह्मणतात, हे रामा, इंद्रियें व त्यांचे विषय ह्यांच्या संबंधानें सुखप्राप्ति नाहीं तर एकांतीं ब्रह्मचिंतन केल्यानें ह्मणजे मी ब्रह्मस्वरूप आहे अशा ज्ञानानें

जो मनाचा नाश करणें तेंच परम सुखस्थान आहे असें समजावें. ॥ १ ॥

दृश्यदर्शनसंबन्धे सुखसंविदनुत्तमा ॥
दृश्यसंवालितो बन्धस्तन्मुक्त्या मुक्तिरुच्यते ॥ २ ॥

दृश्येति। विषयेन्द्रियसंबन्धे याऽनुत्तमा सुखसंवित्सैव दृश्यसंबन्धसंवलितः दृश्यसंबधभावयुक्तोबन्धः । तन्मुक्त्या दृश्यसंबन्धाऽभावे केवलं सुखभावं मुक्तिरित्यर्थः ॥ २ ॥

आतां वर सांगितलेला जो इंद्रियें व त्यांचे विषय ह्यांचा संबंध यांतच जें सुख मानणें ह्याचेंच नांव बंध व त्या संबंधाचा त्याग करणें ह्याचें नांव मुक्ति असें आहे. ॥ २ ॥

शुद्धं सदसतोर्मध्ये पदं लब्ध्वावलम्ब्य तत् ॥
सबात्याभ्यन्तरं विश्वं मा गृहाण विमुञ्चमा॥ ३॥

शुद्धमिति । सदसतोरजडाजडयोर्मध्येवर्तमानं शुद्धं पदमवलंब्य सबाह्याभ्यंतरं विश्वं मा गृहाण मा वा विमुञ्च। विश्वं कालत्रयेऽपि नास्तीत्यर्थः ॥ ३ ॥

सत् आणि असत् ह्मणजे जड आणि अजड यांमध्यें जें शुद्धपद त्याचें अवलंबन करून अंतर्बाह्य जें विश्व त्याचें ग्रहण करूं नको व त्यागही करूं नको ह्मणजे कालत्रयीं विश्व नाहीं असें समज व सर्वत्र ब्रह्मबुद्धीचें अवलंबन असूंदे. ॥ ३ ॥

जडाजडदृशोर्मध्ये यत्तत्वं पारमार्थिकम् ॥
अनन्ताकाशहृदयं तत्सदाश्रय सर्वदा ॥ ४ ॥

जडेति। जडाजडज्ञानयोर्मध्ये यत्पारमार्थिकं तत्त्वमनंतमाकाशवद्धृदयमयते प्राप्नोति। एत्तादृशं व्यापकं सच्छुद्धं तत्वं सर्वदा आश्रय ॥ ४ ॥

आतां वर सांगितलेल्या जड व अजड ज्ञानामध्यें जें पारमार्थिक ज्ञान आहे त्याचा आश्रय करून सत्, शुद्ध, असें जें तत्व त्याचाही आश्रय कर. ॥ ४ ॥

द्रष्टुर्दृश्यस्य सत्ताऽनुबन्ध इत्यभिधीयते ॥
द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ॥ ५ ॥

द्रष्टुरिति । द्रष्टुर्दृश्यस्य या सत्तासंबन्धस्तद्वशाद्द्रष्टा बद्धः तदभावे विमुच्यते ॥ ५ ॥

दृश्य आणि द्रष्टा यांचा जो आस्तित्वरूपी संबंध तोच बंध समजावा. व तेणेंकरूनच द्रष्टा बद्ध होतो. आणि त्याच्या अभावानें मुक्तही होतो करितां दृश्य आणि द्रष्टा भिन्न आहेत असें मानूं नको. ॥ ५ ॥

द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ॥
दर्शनप्रथमाभासमात्मानं समुपास्महे ॥ ६ ॥

द्रष्टृदर्शनेति । द्रष्टा दर्शनं दृश्यमेतानि त्रीणि वासनया सह त्यक्त्वा दर्शनं प्रथममाभासते । येन तादृशमात्मानं वयमुपास्महे ॥ ६ ॥

आतां द्रष्टा, दर्शन व दृश्य या तिघांचा वासनेसह त्याग करून प्रथम ज्याचें दर्शन होतें असा जो आत्मा त्याची आह्मी उपासना करितों. ॥ ६ ॥

द्वयोर्मध्ये गतं नित्यमस्ति नास्तीतिपक्षयोः ॥
प्रकाशकं प्रकाशानामात्मानं समुपास्महे ॥ ७ ॥

द्वयोरिति । अस्ति नास्तीति पक्षद्वयोर्जडाजडयोर्मध्ये गतं प्रकाशानां सूर्यादीनां प्रकाशमात्मानं समुपास्महे । य आदित्यस्तपतीति श्रुतेः ॥ ७ ॥

अस्ति व नास्ति या दोन पक्षाच्या ह्मणजे जड आणि अजड यांच्या मध्यें असून सत्य, ज्ञान, इत्यादिकांना प्रकाशक जो आत्मा त्याची आह्मी उपासना करितों. कारण जो आदित्य ह्मणजे सूर्य जो उजेड करितो तो त्या आत्म्याच्याच प्रकाशानें आहे अशा बद्दल श्रुतिप्रमाण आहे. ॥ ७ ॥

निद्रादौ जागरस्यान्ते यो भाव उपजायते ॥
तं भावं भावयन्साक्षादक्षयानन्दमश्नुते ॥ ८ ॥

निद्रेति । जाग्रदवस्थान्ते निद्रारंभे यो भाव उपजायते तं भावं भावयन् अक्षयमानन्दं सदाऽश्नुते ॥ ८॥

निद्रेच्या अगोदर व जागराच्या अंतीं जो भाव उत्पन्न होतो त्याचें ध्यान करून ह्म० त्या अवस्थाविशिष्टाचें ध्यान करून प्राणी अक्षय आनंदाला भोगतो. ह्मणजे आत्म्याला वर लिहिलेल्या अवस्थांचा अभाव आहे. ॥ ८ ॥

प्रशान्तसर्वसंकल्पा या शिलावदवस्थितिः ॥
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥९॥

प्रशान्तेति । प्रशान्ताः सर्वे संकल्पा यस्या ईदृशी शिलावत् निर्व्यापारा जाग्रन्निद्राहीना या स्थितिः सा स्वरूपस्थितिः ॥ ९ ॥

आतां स्वरूपस्थिति सांगतात. जीमध्यें सर्व संकल्प शान्त झाले आहेत, व जी शिलेप्रमाणें स्थिर स्थितीला पावलेली आणि जाग्रदवस्था व निद्रावस्था याहून निराळी ती स्वरूपावस्था समजावी. ॥ ९ ॥

जडतां वर्जयित्वैकां शिला या हृदयं च यत् ॥
अमनस्कं महाबाहो तन्मयोभव सर्वदा ॥ १० ॥

जडतामिति । जडतावर्जने या शिलावदवस्थितिः । हे महावाहो रघुनाथ मनो व्यापारहीनं सर्वदा तन्मयोभव ॥ १० ॥

हे रामा, तूं मनोव्यापार रहित होऊन दगडांतील जडत्वाचा परित्याग करून जी स्थिर अवस्था राहते त्या अवस्थेनें युक्त असा निरंतर रहा. ॥ १० ॥

सत्यानन्दचिदाकाशस्वरूपः परमेश्वरः ॥
मृद्भाजनेषु मृत्सा च सर्वत्रास्त्यपृथक् स्थितिः ॥११॥

सत्येति । सत्यः आनंदः चिद्रूपः आकाशतुल्यः परमेश्वरः सर्वत्र अपृथक स्थितिरस्ति । मृत्पात्रे मृत्तिकावत ॥ ११ ॥

सत्य, आनंद, चिद्रूप, आकाशतुल्य असा परमात्मा सर्वत्र अपृथक अवस्थेनें आहे. जशी मृत्तिका मृत्तिकापात्रांचे ठिकाणीं एकच आहे त्याप्रमाणें. ॥ ११ ॥

अपारावारविस्तारसंवित्सलिलवल्गनैः ॥
चिदेकार्णव एकोयं स्वयमात्मा विजृम्भते ॥१२॥

अपारेति । न विद्यते पारावारो तीरं यस्यास्तादृशी विस्तारा या संवित्तदेव सलिलं तद्वत् वल्गनैश्चिदेकार्णव एवायमेक आत्मा विजृम्भते ॥ १२ ॥

अनंत अशी जी संवित् ह्मणजे ज्ञान तिनें युक्त जो चिद्रूपी समुद्र त्याचे ठिकाणीं एक आत्माच प्रकाशरूपानें आहे दुसरें कांहीं नाहीं. ॥ १२ ॥

भरिताशेषदिक्कुञ्जमनन्ताकाशनिर्भरम् ॥
एकवस्तु जगत्सर्वं चिन्मात्रं वारिवाम्बुधिः ॥१३॥

भरितेति । भरिता व्याप्ता अशेषा दिशः कुंजाश्च येनेदृशमनन्तमाकाशवन्निर्भरं व्यापकं चिन्मात्रमेकं सजातियविजा-

तियस्वगतभेदरहितं वस्त्वेव जगत् । यथाम्बुधेः वाः जलमेव ॥ १३ ॥

ज्यानें सर्व दिशा व्यापिल्या आहेत असें, अनंत व आकाशाप्रमाणें व्यापक असें चिद्रूपच हें सर्व जगत् आहे. जसा समुद्र ह्मणजे जलच आहे त्याप्रमाणें जगत् चिद्रूप आहे. ॥ १३ ॥

निरंशत्वाद्विभुत्वाच्च तथानश्वरभावतः ॥
ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकं॥१४॥

निरंशेति । निरंशत्वाद्विभुत्वाद्व्यापकत्वादनश्वरत्वाच्च पुनर्न ब्रम्हणोम्बरस्य च नास्ति भेदः । परन्तु ब्रह्मणश्चैतन्यमधिकं नभस्तु जडमित्यर्थः ॥ १४ ॥

निरंशत्वानें किंवा व्यापकत्वानें किंवा अनश्वरत्वानें ब्रह्मामध्यें व आकाशामध्यें मुळीच भेद नाहीं. परंतु ब्रह्मामध्यें चैतन्य हा अधिक धर्म आहे तो आकाशामध्यें नसून शिवाय जडत्व आहे. ॥ १४ ॥

निस्तरङ्गोतिगम्भीरः सान्द्रानन्दसुधार्णवः ॥
माधुर्यैकरसाधार एक एवास्ति सर्वतः ॥ १५ ॥

निस्तरङ्ग इति । ईदृशो आत्मा एक एव सर्वतोऽस्ति । कीदृशः निस्तरंगः स्थिरः अत्यन्तगभीरः । सान्द्रानन्द एव सुधा तस्या अर्णवः । माधुर्यानंद एवैकरसस्तदाश्रयः ॥ १५ ॥

आत्मा, स्थिर, अत्यंत गंभीर, सांद्रानंद हीच जी सुधा तिचा समुद्र व माधुर्यानंद हाच रस त्याला आश्रय असा आहे. ॥ १५ ॥

समस्तं खल्विदं ब्रह्म सर्वमात्मेति मागतम् ॥
अहमन्य इदं चान्यादित्यखडं न खडय ॥१६॥

समस्तमिति । इदं दृश्यं जगत्समस्तं ब्रह्मैवात्मैव । ततोहमन्य इदं जगच्चान्यदित्यखडं ब्रह्मरूपं मा खंडय ॥ १६ ॥

हें जें संपूर्ण जगत् दिसतें तें निश्चयानें ब्रह्मच आहे ह्मणजे आत्मस्वरूप आहे ह्मणून मी व हें जगत् निराळें आहे असें मानीत नाहीं तर एकच आहे असें मानतों. ॥ १६ ॥

यदैव ब्रह्मणो रूपं ततं बुद्धमखण्डितम् ॥
तदा विस्तीर्णः संसारः परमेश्वरतां गतः ॥१७॥

यदैवेति । ततं व्याप्तमखण्डितं ब्रह्मरूपं यदैव बुद्धं तदैव विस्तीर्णः संसारः परमेश्वरतां गतो भवति । ब्रह्मैव भातीत्यर्थः ॥ १७ ॥

जेव्हां हें ब्रह्मस्वरूप व्यापक आहे असें जाणिलें जाईल तेव्हांच हा विस्तीर्ण संसार परमेश्वराच्या ठिकाणीं लीन होतो ह्मणजे एकच ब्रह्म आहे असा बुद्धीचा निश्चय होतो. ॥ १७ ॥

समस्तमेव ब्रह्मेति भाविते ब्रह्म वै पुमान् ॥
पीतेऽमृतेऽमृतमयः कोनाम न भवेदिति ॥ १८ ॥

समस्तमिति । सर्वं ब्रह्मेति भाविते पुमान ब्रह्मैव भवेत् । यथा अमृते पीते सति को नाम पुरुषोमृतमयो न भवेत ॥१८॥

सर्व ब्रह्म आहे अशा भावनेनें ती भावना करणारा ब्रह्मस्वरूप होतो. अमृत प्राशन केलें असतां कोण अमृतमय होणार नाहीं तर होईलच त्याप्रमाणें तो ब्रह्ममय होईलच. ॥ १८ ॥

भव्योऽसि चेत्तदेतस्मात्सर्वमाप्नोषि निश्चयात् ॥
नोचेद्बह्वपि संप्रोक्तं त्वयि भस्मनि हूयते ॥ १९ ॥

भव्य इति । यदि त्वं भव्योऽसि ब्रह्मज्ञोऽसि तर्हि ब्रह्मनिश्चयात्सर्वं प्राप्नोषि । नोचेद्बह्वप्युक्तं भस्मनि होमवन्मिथ्यैव वृथैव ॥ १९ ॥

जर तूं ब्रह्मज्ञ होसील तर त्या ज्ञानापासून तुला सर्व प्राप्ति

होईल. नाहीं तर जसें भस्मामध्यें हवन करणें व्यर्थ होतें तसा तुझे ठिकाणीं पुष्कळ बोध केला तरी तो व्यर्थ आहे. ॥ १९ ॥

अपि विज्ञाततत्वेन तदाभ्यस्यमिदं सदा ॥
न नाम मात्रात्कतकफलमम्बुप्रसादकम् ॥ २० ॥

अपीति । विज्ञाततत्वेनापीदमेव सदाभ्यस्यं अहं ब्रह्मास्मीति । तत्र दृष्टांतमाह कतकफलं नाम मात्रे गृहीते सति जलप्रसादकं न भवति ॥ २० ॥

आतां तत्व ज्ञान झालें तरी "अहं ब्रह्मास्मि" ह्मणजे मीच ब्रह्म आहें असा निरंतर अभ्यास पाहिजे. केवळ शाब्दिक ज्ञान उपयोगी नाहीं. जसें कतकवृक्षाचें फल गढूळ पाणी शुद्ध करितें परंतु केवळ फलाच्या नामोच्चारणानें उदकाची शुद्धि होत नाहीं त्याप्रमाणें ॥२०॥

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ॥
इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥२१॥

अहमिति । वासुदेवाख्यं परं ब्रह्माहमेव निश्चितः मुक्तः । तदभावे बद्ध एव नरः ॥ २१ ॥

ज्याला वासुदेव ह्मणतात, व ज्याचा नाश नाहीं असें जे ब्रह्म तेंच मी आहें असा निश्चय झाला असतां मनुष्य मुक्त होतो व निश्चय झाला नाहीं तर बद्धच रहातो ॥२१॥

नेति नेतीति नेतीति शेषितं यत्परं पदम् ॥
निराकर्तुमशक्यत्वात्तदस्मीति सुखी भव ॥ २२ ॥

नेति नेतीति । नेतीत्यादि व्यवहारनिषेधे यदवधिभूतं तदहमस्मीति ज्ञात्वा सुखी भव ॥ २२ ॥

नाहीं नाहीं नाहीं असा जो व्यवहारनिषेध त्याला अवधिभूत

जें कांहीं शेष तें मी आहें असें जाणून सुखी हो ह्म०मी ब्रह्मस्वरूप आहे असें जाणून आनंदानें रहावें ॥२२॥

आत्मानं सततं ब्रह्म विद्धि चैकं निरन्तरम् ॥
अहं ध्याता परं ध्येयमखण्डं खण्डसे कथम् ॥ २३ ॥

आत्मानमिति । निरन्तरं ब्रह्मैवात्मानं जानीयात् । अखण्डं ब्रह्म ध्यातृध्येयभावनेन कथं खण्डयसि ॥ २३ ॥

आत्मा ह्मणजे ब्रह्म आहे असे निरंतर जाणावें मग मी ध्याता व तें ध्येय हा भाग कसा राहील व असा भेद तूं तरी कसा करशील. तात्पर्य आत्मा आणि ब्रह्म हीं अभेदानें आहेत. ॥ २३ ॥

सोऽहंचिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ॥
ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते ॥ २४ ॥

सोऽहमिति । चिन्मात्रं ब्रह्माहमस्मीति स्मरणं ध्यानं तस्य विस्मरणं समाधिः ॥ २४ ॥

आतां ध्यान व धारणा कोणाला ह्मणावें तें सांगतात. चिन्मात्र जें ब्रह्म तेंच मी आहें असें निरंतर स्मरण करणें ह्याचें नांव ध्यान व त्या ध्यानाचें विस्मरण होणें ह्याचें नांव समाधि. ॥२४॥

ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ॥
संप्रज्ञातसमाधिः स्याज्ज्ञानाभ्यासप्रकर्षतः ॥२५॥

ब्रह्माकारेति । ज्ञानाभ्यासातिशयेन अहंकारं विना यो ब्रह्माकारमनोवृत्तिप्रवाहः स एव संप्रज्ञातसमाधिः ॥ २५ ॥

आतां संप्रज्ञात समाधि सांगतात. अति ज्ञानाभ्यासानें अहंकाररहित जो ब्रह्माकार मनोवृत्तीचा प्रवाह त्यालाच संप्रज्ञातसमाधि ह्मणावें. ॥ २५ ॥

कल्पान्तवायवो वान्तु यान्तु चैकत्वमर्णवाः ॥
तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिः ॥२६ ॥

कल्पान्तेति । कल्पान्तवायुषु प्रवहत्सु समुद्रेष्वेकत्वं गतेषु द्वादशादित्येषु तपत्स्वापि निर्मनसो ब्रह्मविदः क्षतिर्नास्तीत्यर्थः ॥ २६ ॥

प्रलयकालचा वायु जरी वहाला तरी वाहूंदे, सर्व समुद्र एकत्र झाले तरी होऊंदेत, द्वादश आदित्य प्रकाशले तरी प्रकाशूंदेत, तथापि ब्रह्मवेत्याला त्याजबद्दल कांहीं क्षति ह्म० कर्तव्य नाहीं ॥ २६॥

या चितिः सर्वभूतानामुदयव्ययसाक्षिणी ॥
तां चितिं पश्यतावस्थां पूर्णानन्दघनामृताम् ॥२७॥

या चितिरिति । सर्वभूतानामुत्पत्तिनाशसाक्षिभूता या चितिः पूर्णानंदव्याप्तां तां चितिरूपामवस्थां पश्यन विचारयत ॥ २७ ॥

जी चिति ह्मणजे चैतन्य सर्व भूतमात्रांचे उत्पत्ति व नाशाबद्दल साक्षी आहे व जी पूर्णानंदानें व्याप्त आहे त्या चितिरूपावस्थेचा निरंतर विचार करावा. ॥ २७ ॥

मनोदृश्यमिदं सर्वं यत्किञ्चित्सचराचरम् ॥
मनसो ह्युन्मनीभावाद्द्वैतं नैवोपलभ्यते ॥ २८ ॥

मन इति । सचराचरं यत्किंचित् जगत्तन्मनोमात्रविलसितं तस्मान्मनस उन्मनीभावाद्ब्रह्मभावनाद्द्वैतं नास्त्येव ॥२८॥

हें संपूर्ण चराचर जगत् केवल मनाचे तरंगानें भासतें, वस्तुतः सर्व मिथ्या आहे. करितां त्या मानससंकल्पाचा नाश केला असतां ब्रह्मभावानें सर्व अद्वैत आहे दुसरी वस्तु नाहीं, व जी दिसते तो सर्व मनोविकार आहे करितां त्या विकाराचा त्याग करावा ह्मणजे ब्रह्मच आहे. ॥२८ ॥

यदस्पन्दं शिवं शान्तं यस्यान्तर्जगतः स्थितिः ॥
स्पन्दास्पन्दविलासात्मा स एकोत्राचिदाकृतिः ॥२९॥

यदिति । यदस्पन्दं निष्कम्पं शिवं शान्तं तन्मध्ये विश्वस्य स्थितिः । स चराचरविलासरूपश्चिदात्मा स एक एव ॥ २९ ॥

जो कंपरहित, कल्याणकारक, शांत, व ज्यामध्यें सर्व जगताची स्थिति आहे, असा जो चराचर विलासरूप व चित्स्वरूप आत्मा तो एकच आहे. ॥ २९ ॥

अहिर्निल्वयनीमहिरात्मतया जगृहे परिमोक्षणतस्तुपुरा ॥ परिमुच्य तु तामुरगः स्वबिले न निरीक्षत आत्मतया न पुनः ॥३०॥

अहीति । अहिः सर्पः स हि निल्वयनीं स्वकंचुकं मोचनात्पुरा प्रथमं आत्मतया स्वकीयत्वेन जगृहे । उरगः सर्पस्तां स्वबिले त्यक्त्वा पुनरात्मत्वेन नावलोकते । इयमहमिति न वेत्ति । तथा ज्ञानी देहमिति भावः ॥३० ॥

जसा सर्प आपली कात टाकण्यापूर्वी ती आपली असें मानतो व टाकल्या नंतर ती आपली ह्मणत नाहीं व प्रेमही करीत नाहीं त्याप्रमाणें ज्ञानी ज्ञानप्राप्ति झाल्यामुळें देहावर ममता ठेवीत नाहीं. ॥ ३० ॥

दोषबुध्योभयातीतो निषेधान्न निवर्तते ॥
गुणबुध्या च विहितं न करोति यथाऽर्भकः॥३१॥

दोषेति । उभयातीतो गुणदोषहीनो ब्रह्मस्वभावत एव निषेधात्पापाचरणान्निवर्तते नतु दोषबुध्या इदं पापं मया न कार्यमिति बुध्या तु न निवर्तते । किंच । ज्ञानी विहितं

**स्नानसंध्यादिकं च करोत्येव । नतु गुणबुध्या । इदं ममावश्यकं इति तु न करोति स्वभावतो ज्ञानी विहितं करोति निषिद्धाच्च निवर्तते । ईदृशो ज्ञानस्वभाव इत्यर्थः ॥ ३१ ॥**

ज्ञान्याचा स्वभाव वर्णन करितात. जसा बालक कोणतेंहि कर्म गुण व दोष या बुद्धीनें करीत नाहीं त्याप्रमाणें गुण व दोषरहित असा ज्ञानी स्वभावानेंच पापाचरणापासून निराळा रहातो. हा दोष लागेल या बुद्धीनें निराळा होतो असें नाहीं. बरें जें पुण्यकर्म करितो तेंहीं हें केलें असतां मला पुण्य लागेल या बुद्धीनें नाहीं तर स्वभावानेंच तसें करितो. ॥ ३१ ॥

अनुत्कीर्णा यथा स्तम्भे संस्थिता शालभञ्जिका ॥
तथा विश्वं स्थितं तत्र तेन शून्यं न तत्पदम् ॥ ३२ ॥

**अनुत्कीर्णेति । यथा अनुत्कीर्णा अलिखितापि शालभञ्जिका पुत्तली स्तंभे स्थितेव असती कथं लिखेत । तथा विश्वमविद्यमानमपि ब्रह्मणि स्थितं तेन विश्वेन हीनं तत्पदं नास्ति ॥ ३२ ॥**

जसें अनुत्कीर्ण ह्मणजे न लिहिलेली तसवीर स्तंभाचे ठिकाणीं आहे असी मानली पाहिजे कारण मुळींच नाहीं तर ती लिहील तरी कशी? त्याप्रमाणें हें विश्व जरी नाहीं तरी ब्रह्माचे ठिकाणीं आहे असें सिद्ध होतें. शिवाय त्या विश्वानें हीन असें ब्रह्मपदच नाहीं करितां तें आहे असें मानलें पाहिजे. ॥ ३२ ॥

**यथा न पुत्रिकाशून्यः स्तम्भोनुत्कीर्णपुत्रिकः ॥**
**तथा भान्तं जगद्ब्रह्म तन्न शून्यपदं गतम् ॥ ३३ ॥**

**यथेति । एक एवार्थः ॥ ३३ ॥**

**जसा चित्रावांचून स्तंभ नाहीं तसें भासमान जगतावांचून ब्रह्मपदच नाहीं. ॥ ३३ ॥**

सौम्याम्भसि यथा वीचिर्न चास्ति न च नास्ति च ॥
तथा जगद्ब्रह्मणीदं शून्याशून्यपदं गतम् ॥ ३४ ॥

इति लघु योगवासिष्ठसारे दशमं प्रकरणम् ॥१०॥

सौम्येति । सौम्ये स्थिरे जले यथा वीचिरस्ति नास्ति च । तथेदं जगद्ब्रह्मणि अस्ति नास्ति च । अज्ञानदशायामस्ति । ज्ञानदशायां नास्तीत्यर्थः । तेनेदं ब्रह्म शून्याशून्यं पदं गतं । जगता हीनं सहितं चेत्यर्थः । व्यावहारिकतात्विकदशाभ्यामित्यर्थः ॥ ३४ ॥ इति श्रीलघुयोगवासिष्ठसारविवरणे महीधरकृते शून्याशून्यपदं गतं नाम दशमं प्रकरणम् ॥ १० ॥

स्थिर उदकामध्यें जशा लाटा आहेत व नाहींत. त्याप्रमाणें हें जगत् ब्रह्माचे ठिकाणीं आहे व नाहीं असें आहे. ह्मणजे अज्ञानावस्थेंत आहे व ज्ञानावस्थेंत नाहीं. तेव्हां व्यवहारपक्षीं आहे व तत्वज्ञानपक्षीं नाहीं. ॥ ३४ ॥ इति लघुयोगवासिष्ठसारांतील दहावें प्रकरण समाप्त झालें.

# प्राकृत पुस्तकें.

**याज्ञवल्क्यस्मृति व्यवहाराध्याय** प्राकृतभाषान्तरसहित—मूल-श्लोक मिताक्षरा टीका आणि दोहोंचीं निरनिराळीं भाषान्तरें उत्तम टाइपांनीं जाड कागदांवर रायल अष्टपत्री सांच्यानें छापलेलें व जाड पुठ्यानें बांधलेलें बुक्. किं. रु. ६ ट. ६ आणे.

**श्रीमद्भगवद्गीता.**—भाषाविवृति—मराठी भाषांतर—सहित. द्वितीयावृत्ति. वेदांतशास्त्रज्ञ विद्वन्मान्य रघुनाथ शास्त्री पर्वते ह्यांनीं, शांकरभाष्यादि अनेक संस्कृत आणि महाराष्ट्र टीकांच्या आधारानें तयार केलेली. ही आवृत्ति शुद्ध करून उत्तम कागदावर मोठ्या अक्षरानें पुस्तक छापून तयार आहे. किं. रु. ४ ट. ५ आणे.

**बाणकादंबरी**—भाग पहिला, गोडबोलेकृत. किं. १।॥ आ.
भाग दुसरा, की० बा० गुर्जरकृत. किं. १४ आ०

**उदारदामोदरनाटक.**—दक्षिणाप्राईज् कमिटीनें पसंत करून बक्षीस दिलेलें. ह्यांत, मंगळवेढे येथील भक्त दामाजीपंत यांचें चरित्र वर्णन केलें आहे. किं. रु. १। टपालखर्च पडणार नाहीं.

# सार्थ सत्यनारायणकथा पूजासहित.

उत्तम टाइपांनीं सुशोभित छापलेली पोथी. किं. ६ आ०. ट. १ आ०.

**सार्थरामगीता**—मूलश्लोक, संस्कृत टीका, वामनी समश्लोकी आणि मराठी भाषांतरासहित. किं. ८ आणे. ट. १ आणा.

**विवाहविधिचंद्रिका**—ऋग्वेदआश्वलायनाविवाहप्रयोगाचें मराठी भाषांतर; मंत्र व भाष्य ह्यांसहित. किं. १२ आणे. ट. १ आणा.

**सार्थशिवगीता.**—अध्याय १८. वर श्लोक व खालीं शुद्ध मराठी भाषांतर. खिशांत रहाणारें, उत्तम टाइपांनीं छापलेलें रेशमी बुक् किं. १ रु. ट. २ आणे.